as an *utsava* and not as a *līlā* in the sense in which that word has been interpreted in later Vaiṣṇava thought and literature.

There is thus no emphasis on the eternal character of this incident as of the other incidents bearing on the fascinating element (*mādhurya*) in the Lord unlike what is the case in post-Caitanya Bengali Vaiṣṇavism. The insistence on the doctrine of the *gopīs* as being ever united with the Supreme Being and on subscribing to the *parakīyā rati* as the cardinal note, a creed systematically and assiduously inculcated in literary works[57] like the *Ananda-vṛndāvana campū* and the *Gopāla-campū* and held up as the plank of divine worship in Vaiṣṇava theology has not materialised by the poet's time. Writers on *bhakti* like Viṣṇupurī and Mādhavendrapurī had individually evinced their affectation for the *madhura* aspect of the Lord, who is primarily the culmination thereof (*madhurimasvā-rājya*). These expressed in verses the potency in the *hlādinī śakti* typified as the *gopīs*, and concentrated in Radhā and sought for their efforts even in exhibiting his *aiśvarya* as in the uplifting of Mount Govardhana.[58] Even the *gocāraṇa* in later Paurāṇie thought has been exalted to the position of such a *nityalīlā*[59] and a host of poets have employed themselves in recounting such *līlās* with religious fervour as in the *mangala kāvyas*[60] which were greatly popular with poets in Sanskrit as well as in Bengali literature. Such *kāvyas* in Sanskrit are not unoften *mahākāvyas* or *sargavandhas* and were acclaimed as worthy works to be read and recited to ensure devotion through the faith in *madhura* or *kāntā-bhāvā*. Srinātha, an elder contemporary of Śri-Caitanya, has acknowledged this in unambiguous language in the introductory verses to the *Caitanyamatadīpikā* (a commentry by him on the entire *Bhāgavatapurāṇā*).

---

[57] *H.C.* IX. 46. दध्ने महीध्रं बत सप्तरात्रं······गोपीजनैः सस्मित मीक्ष्यमाणः······। cf. पद्यावली V. 264. सत्रासार्त्ति यशोदया प्रियगुणप्रीतेक्षणं राधया······पायाद्व वः करपदमस्थितमहाशैलः सलीलो हरिः ॥ and v 267. दूरं दृष्टिपथात्तिरोभव हरेर्गोवधनं बिभ्रतस्त्वय्यासक्तदृशः कृशोदरि करः स्रस्तोऽस्य मा भूदयम् ॥ गोपीनामिति जल्पितं कलयतो राधानिरोधाश्रयं श्वासाः शैलभरश्रमभ्रमकराः कंसद्विषः पान्तु वः ॥

[58] *H.C.* IV. 3. (गोपवेशमसु चचार स कृष्णः·········।) and IV. 21. (एवमादिबहुबालकलीला नन्दसूनुरचिताः शुभशीलाः। गोपिकागृहमुपेत्य·········।) cf. गोगोपगोपिकासङ्गे यत्रे क्रीडति कंसहा of the later purānas where the present tense in क्रीडति is significant.

[59] The *Mādhavamahotsava*, and the *Govindalilāmṛta* which are in the form of *sargabandha* ; and the *Vraja-vilāsa*, the *Kṛṣṇāhnikakaumudī* and the *Sankalpakalpadruma*, shorter in compass, are such *maṅgalakāvyas*.

[60] The *Caitanyacaritāmṛta* (madhyalīlā Ch. XV) records :—गुणराज-खान कैल श्रीकृष्णविजय। ताहाँ एकवाक्य ताँर आछे प्रेममय ॥ नन्दनन्दन कृष्ण मोर प्राणनाथ। एइ वाक्ये विकाइनु ताँर वंशेर हात ॥ The relevant lines in the *Srikṛṣṇavijaya* are :—एक भावे वन्द करि योड़ करि हात। नन्दनन्दन कृष्ण मोर प्राणनाथ ॥ This work gives the data of its composition thus :—तेर श पंचानब्बइ शके ग्रन्थ आरम्भन। चतुर्दश दुइ शके हैल समापन ॥ (Sukumar Sen in *Banga-Sāhityer Itihās*, p. 108.)

The *Haricarita*, however, bears ample evidence of the propagation of the *bhakti* cult of the *Bhāgavatapurāṇa* pattern in Bengali society of the time—a bias to which had already been marked in some of the early ancestors and relations of the poet. Just about a decade earlier. Mālādhara Vasu, better known as Guṇarāj Khān, had given an easy and connected rendering[63] of the tenth *skandha* of the *Bhagavata* in Bengali verse, where due emphasis was laid on the significance of Lord Kṛsna as Nandanandana, a feature which Śri-Caitanya himself declared as the sterling merit of the work, in which, as in the *Haricarita*, the *Harivaṁśa* and the *Viṣṇupurāṇa* also were laid under contribution. Not many years after this, the *Bhāgavatācarya*, popularly known as Raghupaṇdita of Varāhanagara (now within the suburbs of Calcutta), a pupil and disciple of Gadādhaṛa-paṇdita, the most intimate associate of Caitanya, gave an almost literal translation of the tenth and eleventh *skandhas* of the *Bhāgavata* to the delight of Bengal Vaiṣṇavas in chaste Sanskritised Bengali.[61] This work, entitled the *Srīkṛṣṇapremataranginī* or *Govindakathāthāmṛta* indicates a closer approach to the tenets preached by Caitanya than the other work *Srīkṛṣṇavijaya*, also a significant title where Kṛṣṇa's exploits are recounted for the culture of what has been termed as *premabhakti*. Caturbhuja's Sanskrit *kāvya* differs from these two in that it has complied with the canons and conventions of the cherished *mahākāvya*-writers of old. This was at the same time used by the common people.

The *Haricarita*, because of its being a representative of mediaeval Bengal Sanskrit composition by a competent scholar-poet who is characterised as an expert in mellifluous Sanskrit (*suravacovaicitryasadmānana*) on a subject which has been the favourite of the people for many centuries, deserves publication. It will serve as a reminder of the fact which is often overlooked *viz.*, that the so-called rhymed verses accord well with the sweet and sonorous nature of *gaudi-riti* of long established standing or that long and sustained composition in such a medium is not only possible but is also delectable. It is elegant without being affected, difficult or artificial and affluent without being devoid of the power of conveying all shades of feeling and all types of story-content, particularly in relation to the narration of the events recorded in the *purāṇas*.

SIVAPRASAD BHATTACHARYYA

---

[61] पापिनी पूतना से ये नाना माया जाने। मायाय युवतीवेश धरिला आपने ॥ केशपाशविनिहितफुल्ल-मल्लि-माला। पृथुश्रोणीकुचभरगमनमन्थरा ॥ क्षीण कटितट पट्टवासपरिधाना। कुण्डलमण्डितगण्ड मुदितवयाना ॥ भुरुभङ्ग-विलसित जनमनोहरा। विलोल अलकावली कुञ्चितकुन्तला ॥ अलस-विलस-गति कमल दुलाय। चकितचपल-दिठि नन्दवरे याय ॥ (*Bhag. pur.* X 6, 4-6.) शुद्धभावे हरि आराधिला एइ रामा। सफल राधिका नाम धरें पूर्ण-कामा ॥ तार भक्तिरसे भगवान् तुष्ट हैला। यारे लञ श्रीगोविन्द गुप्त स्थाने निला ॥ (*Bhag. pur.* X 30. 28).

# हरिचरितम्

## प्रथमः सर्गः

सुरसमूहसमीहितसिद्धये
धरणिधारणगोद्विजवृद्धये ।
यदुकुलेऽवततार य एष नः
सततमस्तु मुदे मधुसूदनः ॥१॥

मुदिरमेदुरमिन्दुनि[भाननं]
विकचपद्मवि[लोभनलोचनम् ] ।
मुररिपुं तडिदुज्ज्वलवाससं
भजत रासरसोत्सवलालसम् ॥२॥

नवरसोल्लसिते(१)ऽम्ब सरस्वति
त्वमिह मामव काव्यसरस्वति(२) ।
... ... ... ...
... ... ... ...॥३॥

क्व च न(३) गौरिव गौरिह(४) मे स्खल-
त्त्ववहितावहिता सततं सताम् ।
इयमुदे[तु मुदे त्वल्पमप्य]-
न्त्यरुचिरं रुचिरं नु मतं सताम् ॥४॥

... ... ... ...
... ... ... ...

सरति सारचिता रचिता पुरा(५)
रससरस्वति येन सरस्वतो ॥५॥

---

१ । रसोन्द···(पा) । सर्गेऽत्र मुख्यतो मात्रासमकं छन्दः ।

२ । सरस्वान् समुद्रः । काव्यसरस्वति काव्यसमुद्रे । एवमेव काव्यप्रकाशोदाहृते देवीशतकीययमके 'सरस्वति प्रसादं मे स्थितिं चित्तसरस्वती'त्यादौ ।

३ । केचन गौरिगौरिऽमे स्खलत्व···(पा) ।

४ । गौरिव गाभीव मे गौः वाक् कुत्रापि न स्खलतित्यन्वयः । सततं सतामवहितो अवधानेऽहिताऽप्रेर्यमाणा स्वत एवोपयोगिनीति यावत् ।

५ । मर्पयन्त्रा रचिता प्रवा···(पा) । सारेण मुख्यांशेन चिता संगृहीता ।

अथ कलिकालकलु[ष](६) ···
··· ··· ··· ···
··· ··· ··· ···-
रिह तत् कथयामि कथायाम् ॥६॥
प्रथममम रवरसमरविशीर्णै-
रसुरजनैरखिलैर[वतीर्णः]।
··· ··· ··· ···
··· ··· ··· ···॥७॥
विषमपदक्रमसंहित(७)वेदं
विलसदखिलमखसखशिखिभेदम्।
सुरऋषिमुनिवरवि ··· ···
··· ··· ··· ···॥८॥
मधुरतरस्वरकिन्नरगीतं(९)
सततमतिमिरमनुष्णमशीतम्।
शीतलमृदुलसुगन्धसमीरं
मधुपकुलाकुलसरसिजनीरम् ॥९॥
अथ धरणीशरणीकरणीयं
परमगुरुं(१०) जगदुपचरणीयम्(११)।
सुखमुपविष्टमजरमरविन्दे
कमलभवं शिरसाऽभिववन्दे ॥१०॥

---

६। ···कन्न···(पा)। द्वितीयतृतीयचरणयोः खण्डितोऽयं श्लोकः। नेपालमातृकायां जीर्णः पत्रान्तः। [·हरमकलितचरितप्रथितप्रसरम्। जनुरनु भुवि यदधत्त हतायां हरि-] इति रीत्या श्लोकप्रपूर्त्तिः स्यात्।—हरिचरितेति काव्यनामहेतुरपि।

७। विषमो गहनः साधारणदुर्बोध इति यावत्। पद-क्रम-संहितेति पदाद्यवयवत्रयेण वेदप्राध्ययननिपुणानां सुपरिचिताः पदक्रमसंहिताऽऽख्याः पाठा अवगम्यन्ते। विषमपदक्रमैः संहिता संयोजिता वेदा यत्र तद् यथा स्यात्तथा।

८। मखस्य यज्ञस्य सखायः सहायाः शिखिभेदा वह्निविशेषा यत्रेति विशेषणम्।

९। किन्नरासीतं (पा)।

१०। परमतरु (पा)।

११। जगदुदुपचरणीयं (पा)।

धर्मज्ञान[वि]रागैश्वर्यै-
रर्चितमतिशयवद्भिरहार्यैः ।
चारुचतुर्वदनश्रुतिवादै-
स्तुलित[नलिन]व[नहंस]निनादैः(१२) ॥११॥ ( युग्मकम् )

विदितधरणिहृदयः स दयालुं
योगशयन[मधि रुचिर]शयालुम्(१३) ।
हरिमवबोध्य कृतस्तवराजं
कनकगिरेः समतानवभाजम्(I)(१४) ॥१२॥

दिनकरकिरणतिरस्करणेन
स्फुरदुरुचारुमरीचिगणेन(१५) ।
गगनतल[मिव भुवं] विदधानं
सुरकुलकेलिकलैकनिधानम् ॥१३॥

विधिमिव परममरालयमुच्चै-
रनुगतयागगणैः श्रितमुच्चैः ।
हरिमिव सानुवलितवनमालं
नन्दकलसदगतमालजालम्(१६) ॥१४॥

---

१२ । तुलितनचवहंस···(पा) ।

१३ । शयालुः शयनशीलः । आलुचि शीङो ग्रहणमिति भाष्यवार्त्तिकम् (पा ३।२।१५८ वा) । रुचिरश्चासौ शयालुश्चेति रुचिरं यथा स्यात्तथा शयालुरिति वा समासः ।

१४ । गिरिसहृतेनवभाजम्···(पा) । कनकगिरेः समं तानवं तनोरिदं तनुतेति स्वार्थिकोऽण्प्रत्ययः । 'हारी हिरण्मयवपु'रिति विष्णुध्यानवर्णनवत् कथमपि सङ्गमनीयम् । 'कनकगिरेः समवाहनभाज'मिति पाठे सापेक्षत्वेऽपि गमकत्वात् समासः । वाहनो विहगराजो गरुडः । 'सुपर्णः स्वर्णचूडे च गरुडे कृतमालके' इति कोषः । हरिवंशे (१।५२।५) एतत्प्रसङ्गे वर्णनं तुलनीयम् । 'तं व्रजन्तं सुपर्णेन पद्मयोनिगतानुगम् । अनुजग्मुः सुराः सर्वे तद्गतासक्तचक्षुष' इति ।

१५ । 'पतत्पतङ्गप्रतिमस्तपोनिधिः' (शि. पा. व. १।१२) 'चयस्त्विषामित्यवधारितं पुरा' (शि. पा. व १।३।१।१) इति भिन्नप्रसङ्गे वर्णने तुलनीये ।
'हरिमिवे'त्यादिश्लोकद्वये श्लेषानुप्राणितोपमा । 'हरिमिवे'त्यत्र हरिपदेन सिंहो बोध्यते । कादम्बर्यां शूद्रकवर्णने 'गङ्गाप्रवाह इवे'त्यादि संस्था तुलनीया ।

१६ । उच्चैः श्रितमुच्छ्रितमिति वृत्तयाऽभिधानम् । परमं मरालं याति श्रयतीति श्लेषः ।

शिवमिव दधतमहीनमनन्तं
गुणमथ सुरसरितञ्च वहन्तम् ।
सुरपतिमिव वरगरिमपवित्रं
त्रिभुवनमिव बहुधातुविचित्रम्(१७) ॥१५॥ (कुलकम्)

तत्र निर्जरस[द]स्यधिरत्ने(१८)
विश्वकर्मविहिताधिकयत्ने ।
मधुरिपु[णाऽनुगतो] भुवनेश-
स्त्रिदशगणैः सह समुपविवेश ॥१६॥

अथ चतुरा चतुराननसारान्
रविसुरपतियम[कुबेरमारान् ] (१९) ।
[नत्वा वाणीं सपदि तदानी-]
मतिकरुणामिति धरणिरभाणीत्(२०) ॥१७॥

शृणुत वचनममरा मम राम(२१)-
कृतबहुबाहुजवंशविराम ।
चर ... .. ...
... ... कलनाश ॥१८॥

[बलभरदुर्धर]दितिसुतवीराः
समरमुपेत्य विमुक्तशरीराः ।
ते भुवि नृपतिकुलादिह जाता
विरचितबहुविधधर्मविघाताः ॥१९॥

---

सानुनि गिरिप्रस्थे वलिता वनानां माला श्रेणी यस्य इति सिंहपक्षे—अनुवलितया वनमालया सह वर्त्तमान इति विष्णुपक्षे । नन्दक आनन्ददायी विष्णुखड्गश्च ।

१७। वरेण गरिम्णा। पविना वज्रेण हेतुना त्रायते इति पवित्र इन्द्रपक्षे। एवमितरत्र । 'पर्वतभेदि पवित्र'मित्यादि श्लोके नलचम्प्वाम् ''हरिमिव हरिमिव हरिमिवे' ति वर्णनं तुलनीयम् ।

१८। अविरते (पा) ।

१९। हरिहरपतीति (पा) ।

२०। अत्र 'नत्वे ति अर्धान्तरैकपदता दोषो । वाक्यावयरत्वेन सोढव्यः । धरणिरभाणि (पा) ।

२१। रामेति सम्बोधनम् । यो रामरूपेणैकदाऽवतीर्ण इत्यर्थः । कृतेत्यादि—बाहुजाः क्षत्रियाः । विरामोऽवसानं नाश इति यावत् ।

बलमवलम्ब्य चिरञ्चतुरङ्गं(२२)
रणगुरुगजरथपत्तितुरङ्गम(२३)।
मुनिमनुजे[षु] विनाऽप्यपराधं
विदधति विविधमनिशमतिबाधम् ॥२०॥
तदतिसुदुःसहभरपरितप्त
[न] प्रविशामि यथा[ऽतलमा]प्ता(२४)।
तत् कुरुताथ हरिः सविशेषं
वचनमिदञ्च शृणोत्ववशेषम् ॥२१॥
एष पुरा [किल] जलधिनिमग्ना-
मुदधरदुरु[तर]दशनविलग्नाम्।
आदिवराहवपुः स पुनर्मा-
मवतु मनुजतनुरनुपमकर्मा ॥२२॥
इति मितमधुरतराक्षरमुक्तं
धरणिवचन[मवधाय प्रयुक्तम्]।
वाचमुवाच रुषाऽपि विमुक्तः
पद्मभवोऽखिलदर्पनिमुक्तः(२५) ॥२३॥
भो विबुधा बहुधा वसुधायां
बहुतररसभरविभवसुधायाम्।
सत्वरमवतरतानुपमायां
रुचिरमुपेत्य परान्नृपमायाम्(२६) ॥२४॥
पूर्वमहं खलु सागरतीरे
कोमलशीतलसुरभिसमीरे(II)।
आकलयन्नति जलधिविलासं
पर्वणि कश्यपसङ्गत आसम् ॥२५॥

---

२२। वलयमवलम्ब्य चिरञ्चतुरङ्गम् (पा)।
२३। रणल्लतरुगजतुकाया (पा)।
२४। एवं ने. मा. अपि पाठः। अतलमिति पातालस्यांशविशेषः। अनुरूपोऽन्त्यानु-
प्रास एकषष्टितमे श्लोके।
२५। सर्पनिमुक्त(पा)।
२६। नृपमाया नृपरूपच्छद्माकृतिः।

तत्र समय उदयस्थितसोमे
जलनिधिरुर्मिभिरतितरलो मे(२७)।
अङ्गमसिञ्चदमुञ्च तदानी-
महमशपं रभसादभिमानी(III) ॥२६॥

[मर्त्यो]त्प[त्ति]मुपैहि पृथिव्यां
नृपतिकलाममलां भज दिव्याम्।
तत्रभवन्तमियन्तव कान्ता
सुरसरिदपि नचिरादभिगन्ता ॥२७॥

स समुदपद्यत भुवि कुरुवंशे
शान्तनुरिति(IV)नृपनिवहवतंसे।
भीष्म इति प्रथितस्थिरशौर्य-
स्तस्य सुत(२८)स्त्वपरोऽद्भुतवीर्यः ॥२८॥

अस्य तु कान्ते इह दिवि याते
व्यासमुनेस्तनयौ जज्ञाते(२९)।
प्रथममिहाभिदधति धृतराष्ट्रं
पाण्डुमपरमनुर[ञ्जित]राष्ट्रम ॥२९॥

तत्तत्तनये भविता भेदः(V)
परमुपजनितजगज्जनखेदः।
तत्र ततोऽवतरन्तु भवन्तः
सत्वरमवनितलोषितवन्तः(३०) ॥३०॥

---

२७। जलधिकर्मिभिरतिचरणो मे (पा)। उदयस्थितसोमे चन्द्रोदय इति यावत्। अतितरल इति गौणवृत्तिव्यपाश्रयः प्रयोगः।

२८। शुभस्त्वपरो (पा)। विचित्रवीर्य इत्यद्भुतवीर्य इत्यप्रतीतताऽवाचकत्वं वा पददोषः।

२९। संजानाते (पा)। व्यासमुनेरिति 'जनिकर्तुः प्रकृति'रित्यपादानं तनयाविति संजज्ञाते इति क्रियायाः कर्म। जज्ञाते जनयामासतुः अन्तर्भावितण्यर्थो धातुः। इह विचित्रवीर्ये दिवियाते इति योजना।

३०। अवनितले उषितं वासः भावे निष्ठा तद्वन्तः। श्रीन्तः सत्वरमवणितरोषितवन्तः (पा)।

इति कमलासनशासनतन्त्रे(३१)
गतवति देवगणे कृतमन्त्रे ।
नारदसुरमुनिरथ निभृतस्थौ
विष्णुचतुर्वदनावुपतस्थौ ॥३१॥

कृतनतिरथ मधुमथनमवादी-
दयमतिशयितहितप्रियवादी ।
किन्न करोति भवानवतारं
कोऽत्र हरेदपरोऽवनिभारम् ॥३२॥

अस्ति पुरी(३२) यमुनामनु रम्या
भुवि मथुरेति सतामभिगम्या ।
शत्रु[घ्नेन स्थापित-]पूर्वा(VI)
हत्वा मधुसुतलवणमपूर्वा ॥३३॥

तत्र दैत्यवरवंशवतंसः
कालनेमिरुदपद्य[त कंसः] (VII) ।
उग्रसेनसुतमिममभिगन्तुं
कः समर्थ इह किमुत निहन्तुम् ॥३४॥

तद्वशतुरगवरः किल केशी
वृन्दावनविपिनाभिनिवेशी ।
हेषितभीषितसुर[मनुजन्तं]
को नु स हन्तु विनाऽत्रभवन्तम् ॥३५॥

धेनुकवत्सककालियनागाः
पूतनिका सञ्जनितजनागाः(३३) ।
येऽधिवसन्त्यसुरा भुवमन्ये
तान्न जयेयुरपर(३४) [इति मन्ये(VIII) ॥३६॥

---

३१ । मन्त्रो मन्त्रणा । तन्त्रो युक्तिः । शासनतन्त्रः शासनाधीनो वा ।

३२ । असि परी यमुना (पा) ।

३३ । सञ्जनितम् आगोऽपराधो मन्युर्वा यया सा । पदमेतत् 'पूतनिका'पदमेवान्वेति ।

३४ । 'जयेयु'रिति शकि लिङ् । अपरे न जयेयुस्त्वमेव जयेरिति यावत् ।

इति मुनिवरवचसामवसाने
मधुरिपुराह सकलमभिजाने(३५)।
किन्तु विधिर्न करोति ममाज्ञां
कुत्र(IX)कुलेऽवतराम्यथ राज्ञाम् ॥३७॥

एवमुदितवति भगवति विष्णौ(३६)
समरशिरसि दितिसुतकुलजिष्णौ।
तदनु विनामतरलतनु(३७) किञ्चित्
समुचितवचनमुवाच विरिञ्चिः ॥३८॥

शृणु पुरुषोत्तम पूर्वमपूर्वा
वरुणगवीः कलयन् खलु सर्वाः।
कश्यप उपहितयज्ञनिमित्तं(३८)
तासु च रतिमभजत ऋषिचित्तम् ॥३९॥

ता न वितरति समापितसोमे-
ऽप्ययम[रपितरि]वरुणो करुणो मे(३९)।
गोचरमाचरदथ रुषितोऽहं
कश्यप[मशपमुपाहितमोहम्(X) ॥४०॥

---

३५। 'ततोऽनुजज्ञे गमनं सुतस्ये'त्यत्र कर्तरि प्रयोगं मन्यमानानां केषाञ्चिन्मतेऽत्राप्यात्मनेपदं समर्थनीयम्।

३६। भगवति जिष्णौ (पा)।

३७। तदनुविलायभरणात्तनु (पा)। तदनु तं भगवन्तम् अनु अभिलक्ष्य विनामेन प्रणामेन तरला भावविह्वला तनुर्यस्य इति यथा स्यात् तथेति क्रियाविशेषणम्। 'तरले'ति लक्षणामूलो ध्वनिः।

३८। कश्यपः कलयन्नासीदिति क्रियाऽध्याहारः।

३९। 'वरुणो मे करुणो मे' इत्यावृत्य पाठः (पा)। सोमशब्दो यागविशेषपरोऽप्यत्र यागसामान्येनोद्दिष्टः। समापितसोमेऽवसितयागे कृतकार्ये। एवं हरिवंशवर्णनेऽपि। ता गवीर्न वितरति न प्रत्यर्पयति। अमरपितरि देवानां पितरि कश्यपे। तथाच हरिवंशे (१।५५।२२)'....द्वे भार्ये कश्यपस्य तु। प्रदीयमाना गास्तास्तु नैच्छतां वरुणस्य वै॥' इति।

कश्यप भवतु भवान् भुवि गोपः(XI)
सलिलपतेः किल गा [निभृगो]प(४०)।
तत्रभवन्तमदितिरतिभक्ता
चिरमुपचरतु सुरभिरभियुक्ता ॥४१॥
स [च] यदु[कुल]जोऽधिमधुरमेव
श्रीमति शूरगृहे वसुदेवः।
देवक्यस्य सतीकुलमु[ख्या]
पत्न्यपराऽपि च रोहिण्याख्या ॥४२॥
अतिसुतपाः सुतपालनजातं(४१)
सुखमनुभवतु स चिरमविघातम्।
तस्य सुतो भव भावय पुण्यां
यदुकुले जनिमपी[ह(5a)घ]रण्याम् ॥४३॥
अहह धरण्यकरोद्वरभाग्यं
परममुपैष्यति बत सौभाग्यम्(४२)।
या त्वन्निर्मलपदकमलाभ्यां
पूजामाप्स्यति हतकलुषाभ्याम्(४३) ॥४४॥
[वृन्दावनग]तगोपवधूनां
लब्धत्वदधरमधुरमधूनाम्।
शक्ष्यति कश्च सुकृतपरिपाकं
वर्णयितुं परमधरितनाकम्(४४) ॥४५॥

---

४०। निभृतस्थले प्रच्छादितवान्।

४१। अतिसुतपा इति श्लेषोपाधानात् यौगिकेऽर्थे रूढे च प्रयोगः। एवं द्वितीयसर्गेऽपि (२।२५)। द्वितीयपक्षे सुतपसं तन्नामानं प्रजापतिमतिक्रान्त इति योजना।

४२। सौभाग्यं शोभनत्वं गुणौदार्यद्वारा। तथा च श्रीमद्भागवते पञ्चमस्कन्धे पृथिव्याः स्वर्गादपि रमणीयतरत्ववर्णनं दृश्यते। एवं व्याख्याने यमकनिर्वाहः सुसहः।

४३। पदकमलद्धां···ह्जरुनुपास्वा (पा)।

४४। नाकः स्वर्गो लक्षणया स्वर्गगतभोगादयः, ते चाधरिता ह्रस्वत्वमापादिता येन सुकृतपरिपाकेन। ते च सुकृतपरिपाकस्यैव सूचकाः।

ये च त्वन्मुखपद्ममवन्या-
मीक्षिष्यन्ते युवतिषु धन्याः ।
जीवन्तः खलु भुक्त्वा स्वर्गं
यास्यन्त्यन्ते परमपवर्गम् ॥४६॥

किमिदमवनिगतदितितनयानां
सुकृतमधिकमपि हतविनयानाम् ।
पश्यन्तस्ते सु[र]मपरोक्षं
ये लप्स्यन्ते रणभुवि मोक्षम् ॥४७॥

इति तुलितामृतसूनृतमुक्तः
कमलभवेन हरिर्विनियुक्तः ।
तं विज्ञाप्य ययावतिधीरं
क्षीरसर[स्वत] उत्तरतीरम् ॥४८॥

तत्र वपुः स विहाय गुहायां
स्वां परिगृह्य परान्निजमायाम् ।
विश्वमुदे वसुदेव गृहे[षु]
स्वं नियुयोज(XII)सदा सुमहे[षु](४५) ॥४६॥

अथ मथुरो(5b)पवने विनिविष्टं
सुरऋषिनारदमतिशयहृष्टम् ।
दूतमुखादशृणोत् खलु कंस-
स्तं प्रणतोऽर्चितवानधिकं सः ॥५०॥

हैमपीठवरमुदितमिवा[र्क
पाद्यम]र्घ्यमतिशुचिमधुपर्कम् ।
गां कपिलामपि:समुपनिनाय
स्तोत्रपुरःसरमृषिवृषभाय ॥५१॥

तमृषिरभाषत कंस यथा स्या-
दहह ममौपयिकं वरि-[वस्या] ।

४६। वसुदेवगृहे स्वविम्बयोज···स्वमहे···(पा)। सुमहेषु प्रकृष्टस्वकीयविभूतिमत्सु सन्ततं प्रचुरोत्सववत्सु वा। "मह उत्सवतेजसो"रिति कोषः।

तामकुथास्तदमरवरमन्त्रं(४६)
शृणु कथयामि भवत्यधितन्त्रम्(४७) ॥५२॥

भुवनमहं विचरन्नहतेच्छं(४८)
सङ्गतितः सुरसमितिमगच्छम् ।
कनकगिरे (४९)र्[विदीधितिभाजं
तत्रालोकयममरसमाजम्(५०) ॥५३॥

तत्र च तव सगणस्य वधाय
त्रिदशकृतः श्रुत एवमुपायः(XIII) ।
देवक्या हरिरष्टमगर्भः(५१)
कर्ता वः स्व[यमिति सन्दर्भः] ॥५४॥

इत्यभिधाय गते मुनिवर्ये
वस्तुगतीहीश्वरवरकार्ये(५२) ।
आहूयानुगतानथ(५३)कंसः
क्रुद्धः साधुवधाय शशंस ॥५५॥

केशिकधेनुकपूतनिकाऽऽद्याः(6a)(XIV)
सर्वे शृणुत वचो मम भृत्याः ।
मामभिमुखयुधि हन्तुमशक्तै-
श्छद्म विधेयममरविनियुक्तैः ॥५६॥

---

४६ । मन्त्रो मन्त्रणा देवतानां गूढोऽभसन्धिरिति यावत् । तां वरिवस्यामिति सम्बन्धः ।

४७ । भवत्यधितन्त्रं भवदायत्तं भवदधीनं कृत्यजातमिति यावत् ।

४८ । विचरन्नु हतेन्द्रं (पा) ।

४९ । अमरगिरेर…(पा) ।

५० । समितिरास्थानो । समाजस्त्वतिरश्चां संघः कृत्यावधारणे सङ्गतः ।

५१ । देवक्या रहिरष्टमगर्भ…(पा) ।

५२ । 'मुनिवर्ये' इत्यस्य विशेषणं वस्त्विवत्यादि—वस्तुगत्या स्वकृत्यसाधनेन नियतिसहशसौलभ्येन ईहि प्रयासशीलम् ईश्वराणां देवतानां वरं मुख्यं कार्यं येनेति बहुव्रीहिः । प्राय इतरऽेव वरशब्दोऽत्रामर्थकः । विश्वजनीनचेष्टस्य नारदस्यैवमुपदेशः पुराणाख्यानेषु शिशुपालवधादौ महाकाव्ये च (१।१८,४१) कोविदां नागोचरः ।

५३ । आकुपानुगता एव कंसः (पा) ।

तन्मम परमहिताय भवद्भि-
र्ग्रामनगर[गिरिवि]पि[नवसद्भिः]।
देवहितेषु सदा विनिविष्टा
वध्या विविधधिया भुवि शिष्टाः ॥५७॥

देवक्यां भविता किल विष्णु-
श्छिद्र (५४)मुपेत्य सदा परजिष्णुः।
कारागार[गुहा]कृतसेवा
साऽपि च निवसतु सहवसुदेवा ॥५८॥

तत्र भविष्यति यत्तदपत्यं
तद्धरणीयमिदं किल सत्यम्।
स्वासुविघाते यत्र हि शङ्का
तत्प्रतिहिंसा नास्तिकलङ्का(५५) ॥५६॥

इति विरचितकृतिरथ मधुरेशः
स्वभवनमतिविरसः प्रविवेश।
विष्णुस्तत्समयेऽकृत चित्तं
षड्गर्भोपनिधानर्निमित्तम्(XV) ॥६०॥

कालनेमित[नयैः]किल षड्भिः-
र्वंधसं सुपरितोषितवद्भिः।
सुरनिकरादवधो वर आप्तः
प्राह हिरण्यकशिपुरिति ततः ॥६१॥

मामपहाय यदार्यकमेवं
सेवितवन्त इहा[पर]-(6b) देवम्।

---

५४। च्छत्रमुपेत्य (पा)। रन्ध्रान्वेषिणो हि शूराः शत्रून् निघ्नन्तीति युद्धनीतिः। सा तु कौशलमेव न शौर्यमिति कंसस्याशयः।

५५। नास्त्यविद्यमानः कलङ्को निन्दा यस्याम् इति तिङन्तप्रतिरूपकेन 'नास्ति'पदेन समासः निर्दोषा अनवद्येति यावत्। तत्प्रतीति—तदिति पदं तत्रेत्युपयोगि। तमिति वा पाठः स्यात्।

तत् पितृतो वधमाप्स्यथ मूढ़ाः
षड्गर्भा इति पदमधिरूढ़ाः ॥६२॥
पाताले सलिले शयितानां
तेषामतिशयमोहयुतानाम् ।
प्राणपती-(XV) (५६)ननुकृष्य रसायां
हरिरिदमाह पराञ्निजमायाम् ॥६३॥
निद्रे गर्भान् षडुपनयैतान्
देवक्युदरमनुक्रमसूतान् ।
सर्वानेव हनिष्यति कंसः
पश्चादेष्यति तत्र मदंशः ॥६४॥
संकृष्य त्वमिमं च ममांशं
वञ्चयितुं सुचतुरमपि कंसम् ।
रोहिण्यां प्रणयेः स समज्ञां(५७)
यास्यति संकर्षण इति संज्ञाम् ॥६५॥
तदनु च मामिह देवकपुत्री
त्वाञ्च यशोदा किल जनयित्री ।
तत्र विधास्यति नौ द्रुतमेव
व्यतिनयनं भवने वसुदेवः ॥६६॥
रक्तकजनवदनादधिगत्य
प्रसवमतित्वरितं समुपेत्य ।
[चे]ष्स्यति कंस उदारशिलायां
त्वामहहाकरुणोऽयमिलायाम् ॥६७॥
अथ [सुरपति]रतिशयितविनीत-
स्त्रिदिवमुपेतवतीमवनीतः ।

५६। एवमपि शब्दतस्तात्पर्यतश्च निर्देशो हरिवंशे (२।२।२६-२८) :—प्राणेश्वरांश्च निष्कृष्य निद्रायै प्रददौ तदा ॥ सर्वप्राणेश्वरांश्चैव षड् गर्भान्नाम देहिन इति। परां निजमायां स्वीयस्वरूपशक्तिं योगमायासंज्ञाम् ।

५७। समज्ञा कीर्त्तिः। संज्ञा नाम। समज्ञां संज्ञां च यास्यतीत्याकूतम्। यद्वा समज्ञा अस्या अस्तीति अर्शआदित्वादचि कीर्त्तिमयीं संज्ञामिति तदात्वे विवरणम् ।

शुम्भनिशुम्भवधाय(7ः)सुनीति-
स्त्वाश्चिरमर्चयिता भगिनीति(XVI) ॥६८॥

दनुजदितिजनिसमूहसहस्रं
युधि विनिहत्य दुरन्तमजस्रम् ।
नन्दयितासि धरां त्वमशेषैः
स्थानचरैरतिचारुविशेषैः(५८) ॥६९॥

यश्च तव स्तवमवहितचित्तं
वित्तयशोजयतनयनिमित्तम्(५९) ।
देवि करिष्यति भुवि स समस्तं
प्राप्स्यति तदधिभविष्यति कस्तम् ॥७०॥

इत्थं मधुरिपुलब्धनियोगा
मायाचपलमुपाहितयोगा ।
षड्गर्भानुपनिहितवती तं
शेषं गर्भमकृषदथ नीतम् ॥७१॥

तदवसरे भगवान् भुवनेशः
सुरतनयविहिताभिनिवेशः ।
देवक्या जठरं प्रविवेश
द्रागुत्सादितसज्जयलेशः ॥७२॥

---

५८। 'ततः स्थानसहस्रैस्त्वं पृथिवीं शोभयिष्यसी'त्यादि हरिवंशे। 'बहुनामनिकेतेषु बहुनामा बभूव हे'ति भागवतपुराणेच 'ततः शुम्भनिशुम्भादीन् हत्वा दैत्यान् सहस्रशः। स्थानैरनेकैः पृथिवीं मण्डयिष्यसी'ति च विष्णुपुराणे।

५९। फलश्रुतिरियं पुराणनिर्देशानुबन्धिनी (हः वः २।१।५३-५५; सप्तशतीचण्ड्यामपि १२।१४-१९)। सा च पुराणमूलत्वं पुराणस्थानीयत्वं वा काव्यस्यास्य वस्तुविन्यासकारितं सूचयति। अवहितचित्तमिति क्रियाविशेषणम्।

गर्भवसतिमिति भगवति याते
नित्यजनितजननीसुखजाते ।
प्राचीवोषसि (६०) बलदतितेजा
रेजे देवकनृपतितनूजा ॥७३॥

धाताऽनुक्षणमधिकरुचे ता-
मस्तुत वस्तुत आदृतचेताः ।
प्रकटित-(६१)दिव्यवपुर्दिवि वाचः
स्निग्धतराक्षरमेवमुवाच ॥७४॥

देवकि देवि शुभाय(7b)जगत्या
धारय गर्भममुं बहुमत्या(६२) ।
एष विधास्यति तव खलु हर्षं
कंसनिधनविधिना बहुवर्षम् ॥७५॥

चरमचरं सकलं जगदेव
स्फुरति यदन्तरयन्तव(६३ देव ।
त्वय्यधि(६४) निवसति गतिरमराणां
हरि हरि भयमपहृतसमराणाम् ॥७६॥

अदितिरसि त्वममरजनयित्री
दितिरसुरप्रवरप्रसवित्री ।
त्वमनिलनभोऽनलप्रसवाऽसि
श्रुतिरथ यज्ञजनन्यवभासि ॥७७॥

---

६० । 'तनयमचिरात् प्राचीवार्कं प्रसूय च पावनम्' इति कालिदासवर्णनं तुलनीयम् । एवं द्वितीयसर्गे पञ्चमश्लोके । भागवतपुराणे तूपमानान्तरमाश्रितम् 'प्राच्यां दिशीन्दुरिव पुष्कल' इति ।

६१ । दलितदिव्यवपुः (पा) ।

६२ । बहुमत्या बहुमानेन गौरवपुरःसरमिति यावत् ।

६३ । तवान्तस्त्वन्मध्ये ।

६४ । त्वय्यधि—'अधिरीश्वरे'इति 'यस्मादधिकं यस्य चेश्वरवचन'मित्यादिना च सप्तमी । हरि हरीति समुदितमव्ययं वाक्यालङ्कारे ।

इति विधिविहितबहुस्तुतिवादा
देवी विगलितसकलविषादा ।
गर्भगतं दधती ररदेवं
नन्दयति स्म सदा वसुदेवम् ॥७८॥

एवमपारकृपारससारः
सर्वजनादिरनादिरुदारः(६५) ।
कुक्षिगतो ववृधे शुभलक्ष्ये(६६)
चन्द्र इवानुदिनं सितपक्षे ॥७९॥

इति हरिचरिताख्ये नव्यसत्काव्यमुख्ये
प्रसरदमृतधारे वर्णितेशावतारे ।
कृतकलुषनिरासे तुष्टबालाविलासे
सकलसुकविवर्गप्रीतये त्वादिसर्गः ॥*॥

———

६५ । उदारो महान् 'उदारो दातृमहतो'रिति कोषः ।

६६ । 'नरपतिकुलभूत्यै गर्भमाधत्त राज्ञी'ति रघुवंश इवात्र जगद्धितमेव शुभं लक्ष्यं तत्र निमित्ते ववृधे ।

* रोमकसंख्यानिर्दिष्टश्लोकेष्वाकरसंवादसूचिका टिप्पणी परिशिष्टे (Appendix A) द्रष्टव्या । एवमितरसर्गेष्वपि ।

# हरिचरितम्

## द्वितीयः सर्गः

(8।) अथ दिवाकरे सिंहसंहने कुमुदबान्धवे रोहिणीरते।
नभसि निर्भरं संवृते घनैस्तिमिरमेदुराभैर्घनाघनैः ॥१॥
अधिविभावरीमध्यमुद्यति द्विजपतौ सुधाभासि सुद्युति(१)।
जयजयस्वने देवताऽऽदिभिः कृत उदित्वरे स्तोत्रवादिभिः ॥२॥
अमरगायनैस्तानवादनै रचितनर्तनैरप्सरोगणैः।
वियति विस्तृते भाति संकुले(२) सुमनसां कुले सत्यनाकुले ॥३॥
जलदमण्डले वारिवर्षिणि त्रिभुवने जने चातिहर्षिणि।
घनघनं घने मञ्जु गर्जति प्रतिपयोनिधि प्रीति-(I)मञ्जति(३) ॥४)
ध्वनति सन्ततं देवदुन्दुभौ मुदितमानसे निर्जरप्रभौ।
रविमिवेन्द्रदिक् चारुनीरजा(४) प्रसुषुवे हरिं देवकात्मजा ॥५॥

(पञ्चभिः कुलकम्)

---

* मुख्यतः सर्गोऽयं कनकमञ्जरीच्छन्दसा निबद्धः (म. म. ११९,११)। अत्र प्रतिपादं षड्भिः पञ्चभिश्च यतिः। छन्दोनिबन्धान्तरेष्वस्येन्दिराराजहंसीविभूषणेत्यादीनि संज्ञाऽन्तराणि दृश्यन्ते। अनतिप्राचीनेन छन्दःसूत्रकारेण विरहाङ्केणेदं (४।९४) प्राकृतभाषाकुक्षौ मात्राच्छन्दस्यन्तर्भावितम्। न च तेन यतिच्छेदः स्वीकृतः। भागवतपुराणे (१०।३१ अः) "जयति जन्मना तेऽधिकं व्रज" इत्यादिनेदं छन्दो विदग्धानां प्रसिद्धमेव।

१। द्युत् दीप्तिः—क्विप्प्रत्ययनिष्पन्नमेतत्पदम्। सु शोभना द्युत् यस्य तस्मिन्।

२। जनतावदेकत्र संघट्टमये। सङ्कुलशब्दस्य समस्तपदेषूत्तरावयवरूपत्वेनैव प्रसिद्धिर्न पुनर्यथाऽत्र।

३। प्रीतिमर्जति (पाः)। अञ्जति प्रकाशयतीति शोभनो विन्यासः।

४। 'तनयमचिरात् प्राचीवार्कं प्रसूय च पावन'मिति शाकुन्तले। 'प्राच्यां दिशीन्दुरिव पुष्कल' इति तु भागवतपुराणे वर्णना। भगवतो रवित्वेन रूपणं वीरप्रधानरसात्मकस्य महाकाव्यस्यास्य समञ्जसमेव।

स(५)शुशुभे पितुश्चासुतस्तदाऽनिमिषचक्षुषः पश्यतो मुदा ।
नवघनच्छविः पीतमम्बरं(II)विदधदुन्नतिं निर्मलं वरम् ॥६॥
वदनचन्द्रमा राजतेतमामुपधिना(8b)शिशोस्तस्य(६) कोपमा ।
अमृतसंमिताल्लोकतः परं स हरति स्म हि ध्वान्तमान्तरम् ॥७॥
कमलकम्रतादर्पमोचने बत विरेजतुस्तस्य लोचने ।
अति विलेसतुर्गण्डमण्डले भगवतोऽद्भुते रुक्मकुण्डले ॥८॥
मुकुट उच्छ्रिते हेमनिर्मिते मणय ऐश्वरे ये विरेजिरे ।
स्फुटमरीचयो भास्करादयो जगति तत्तुलां के नु भेजिरे ॥९॥
गलमशोभयत्तस्य कौस्तुभः पुरुगभस्तिभिर्भानुसन्निभः ।
मिलितमौक्तिकावल्ल्युरःस्थलं(७) विमलतारकं किं नभस्तलम् ॥१०॥
अहह बाहवो दानवाहवोद्धुरजयश्रियाऽऽखण्डलप्रियाः ।
व्यतिबभूविरे काञ्चनाङ्गदा भगवतो लसत्कङ्कणास्तदा(८) ॥११॥
प्रथितविक्रमं चक्रमुत्तमं रिपुविभङ्गदां निर्गुणाङ्गदाम्(९) ।
दितिसुताङ्गजं(१०) कम्बुमम्बुजं दधदयं करेऽक्ष्यतामरैः ॥१२॥
सकुलिशाङ्कुशे साम्बुजध्वजे(9a)सुरुचिरे हरेः पादपङ्कजे ।
रुरुवतुस्तयोर्मञ्जुहंसकौ(११)मधुरनिस्वनान्वितहंसकौ ॥१३॥

---

५। न शुशुभे दधदुन्नतिं निर्मलमिति च माः पाठः। उन्नतिं विदधदुदीयमानमिति यावत्।

६। उपधिना छलेन। नात्र तावदप्यैणालङ्कारिकसम्मताऽपह्नुतिगर्भा समता। परन्तु वदनचन्द्रमा एव प्रकृतश्चन्द्रः, न्यूनस्ततो गगनगतश्चन्द्र इति प्रतीपालङ्कारो व्यङ्ग्यः।

७। मीलितमौक्तिकावन्युक…(पा)।

८। प्रकरणमिदं भगवतः सहजस्य रूपस्य मौक्तिकावल्यादेराभरणस्य तथा शङ्खचक्रनन्दककौमोदक्यादेरायुधस्य शिशुपालवधवर्णितशैलीमनुसृत्य प्रवृत्तमिति तस्य महाकाव्यस्य तृतीयेसर्गे श्लोकसन्दर्भतोऽभिज्ञेयम् (३।३—२१ शि. पा. व)। श्लोकस्य पूर्वार्धं 'क्वानुजे मम निजे दनुजारा'रिति नैषधीयपद्यांशस्य प्रपञ्चकम्। निर्गुणामित्यापाततो विरोधेन गुणोत्कर्षसूचनम्।

९। कौमोदकी भगवद्गदा निःसूत्रैवेत्याख्यानेषु पठ्यते। निर्गुणामित्यापाततो न्यूनतयोत्कर्षसूचनम्।

१०। दितिसुताः पञ्चजनाख्यदैत्याः। दितिसुताङ्गजं पाञ्चजन्यं कम्बुं शङ्खम्।

११। हंसकश्चरणाभरणम्, अन्यत्र तु हंसा एव हंसका इति स्वार्थिकः 'क' प्रत्ययः।

तमिममीदृशं भूतलस्पृशं परमपूरुषं पश्यता भृशम् ।
अधिगतामलं(?)कालभानुना(१२)समभितुष्टुवे शूरसूनुना ॥१४॥
जय जयाद्वयानन्दचिन्मय स्वमहिमादितक्ष्माऽघसञ्चय ।
भवभवात्ययायातिसादरैश्चिरनिरन्तरं(१३) चिन्त्यसे नरैः ॥१५॥
कलिविलासजं किल्बिषं विषं स्मरणमेव ते श्रीहरेः हरेत् ।
किमु विलोकनं लोकनन्दनं नयनयोः सुधासेकनिन्दनम् ॥१६॥
मम समन्ततोऽनाकुलं कुलं यदिह जन्म ते प्रस्फुरन्मते(१४) ।
परमिदं वपुः स्वश्चतुर्भुजं तिरय(IV)वञ्चयन् कंसभूभुजम् ॥१७॥
स किल देवकीगर्भसम्भवान् मम सुतानहन् वेद तद्भवान् ।
तव कृते ततोऽद्यापि यातना बत विधास्यते नित्यदुर्मनाः ॥१८॥
तदतिपीड़नादेव नाथ ते सपरिदेवना देव नाथते ।
इयमसौ प्रसूरप्यसाधुना(१५) विहितबाधना(9b) नीरसाऽधुना ॥१९॥
इति वचोमयैः प्रश्नसंचयैरनघमर्चिते(१६) स्वामिनाऽच्युते ।
अवसरे वरे देवकात्मजा तमभिपूजयामास गीःस्रजा ॥२०॥
जय हरे (V)स्थिर श्रीमहोदय त्वमसि नौ सुतो यन्महोदयः ।
फलमिदं महत् स्वस्य कर्मणो नहि विभाति यन्मर्त्यधर्मणोः(१७) ॥२१॥

---

१२। कालभानुः काल एव भानुरित्यर्थे योज्यः। 'मलङ्कल-भानुना' इति पा०।

१३। स्वमहिम्ना स्वकीयैश्वर्येण करणेन आदितः कृतक्षयः क्ष्माया अघसञ्चयः पापराशिर्दुष्कृतिनामपराधपरम्परा वा येन ततसम्बुद्धौ। भवस्य संसारस्य भव उद्भवस्तस्यात्ययायोच्छेदाय। चिरनिरन्तरमिति पौनरुक्त्यम्। बहुकालं व्याप्य सन्ततमिति कथञ्चित् समर्थनम्। अत्र सह सुपेति सूत्रेण समासः।

१४। प्रस्फुरन्मते इति सम्बोधनम्। प्रकर्षेण स्फुरन्ती मतिरागामिगोचरा बुद्धिर्यस्य हे बुद्धिमत्तमेत्यर्थः।

१५। अति पीड़नात् सपरिदेवनाऽश्रुभरखिन्ना प्रसूः प्रसूतिर्नाथते याचत इति योजना। असाधुना खलेन कंसेन विहितबाधना कदर्थ्यमाना नीरसा म्लानाकृतिरिति यावत्।

१६। सञ्चयः समूहः। स्वामिनेति पदं वसुदेवेनेत्यर्थ उद्दिष्टम्। अनघं निर्दोषं यथा स्यात्तथा यथाविधीत्यर्थः।

१७। मर्त्यधर्मणोरिति समासान्तोऽनिच्। मनुष्यधर्मणोरावयोः वसुदेवदेवक्योरित्यर्थः। स्वस्येत्यादि पित्रोरभाग्योद्देशेन स्वगतप्रख्यं वचनम्।

भगवतो बतोदारचेष्टया रविसमानया वा रुचेष्टया(१८)।
अवगतं मयाऽऽदौ यशस्करस्त्रिजगदीश्वरः क्ष्मामयान्तरः(१९) ॥२२॥
तदधुना(VI)कुरु प्राकृतं वपुः समगिराऽचिराद्वश्च्यतां रिपुः।
अतिखलः खलु श्रीमतः सुतानयमपोथयत् षट् शिलासु तान् ॥२३॥
इति विलापिनीं मातरं मुहुर्मधुरया गिराऽऽश्वासयन् बहु।
अभिदधे हरिः सर्वतः परि-स्फुरदनश्वरज्ञानभास्करः ॥२४॥
जननि मत्पिता योऽयमीशिता स सुतपा इति प्राक् प्रजापतिः।
अभवदुत्तमस्तत्र च त्वम-प्यमरजन्मभूः पृश्निरित्यभूः ॥२५॥
सुतमभीप्सतो (6a) र्वान्तिपस्यतोरनिलभक्ष्ययोर्योगदक्षयोः(VII)।
युगचतुष्टयेनातितुष्टये(२०)स्वयमदर्शयं रूपमव्ययम् ॥२६॥
इदमुदीक्ष्य च स्नेहदे हि नौ वरमयाचतां देवदेहिनौ।
तनयमुत्तमं स्वात्मना समं भुवनविश्रुतं ख्यातविक्रमम् ॥२७॥
अथ तथाऽस्त्विति व्याहरं वरं जगति चात्र नासम्मितं परम्।
अकलयं युगं(२१)तावकार्भता-मिति हि मे मता पृश्निगर्भता ॥२८॥
त्वमदितिर्यदाऽऽसीरहं तदाऽजनिषि वामनस्तत्र वाङ्मनः।
चिरमनन्दयं देवि वन्दयन्निह च मातरं त्वामवातरम् ॥२९॥
वपुरिहेदृशं दर्शितं मया दिविजमज्जनुःस्मारणेच्छया।
तदिह साध्वसं(२२)नाम हीयतामनुगतौ युवां नामहीयताम्(२३) ॥३०॥
इति स मोमुहन् नाम मायया(२४) पितृसमीहितां बालतामयात्।
अथ पिता तमुत्सङ्गसङ्गतं समनयद्बहिः स्वं वशं गतम् ॥३१॥

---

१८। वा इष्टया रुचा इति छेदः। कान्त्या दीप्त्येत्यर्थः।

१९। पृथिवीं प्रति सदैव ममत्वान्वितः। तत एवावतारत्वेनाविर्भावः।

२०। चतुर्ष्वपि कृतादिषु युगेषु भगवत आत्मप्रकटनं वर्णवैलक्षण्यादि च पुराणप्रसिद्धम्।

२१। युगमित्यत्यन्तसंयोगे द्वितीया। अर्भता पुत्रत्वम्।

२२। साध्वसं विस्मयभयहर्षव्यतिकरात्मकं काव्येषु प्रसिद्धम्।

२३। अनुगतौ मयि भावप्रवणौ युवां न अमहीयताम् न पूजार्हावभवताम् इति काकुः, अपि तु नितरां जगत्पूज्यावेव।

२४। मोमुहन् भृशमत्यर्थं वा मुह्यन्। यङ्लुकि शतृप्रत्ययः। पितृसमीहितां पितुरीप्सितां 'तदधुना कुर्वि'ति(२३ श्लोः) प्रत्यनुनयानुगुणाम्। नाम सम्भावनायाम्।

बिभिदिरे तदा द्वार(२५)आकुला द्रढ़-(10b)कवाटिकाकीलश्रृङ्खलाः(VIII)।
परिदुधुक्षिरे(२६) तत्र रक्षकाः सपदि निद्रया यन्त्रिताक्षकाः(२७) ॥३२॥
प्रचलतीश्वरे नन्दमन्दिरं फणिपतिः फणैः स्वैर्नभोऽगिलत्।
.... .... .... (२८) ॥३३॥
चलजलभ्रमस्रोतसाऽऽविला किल कलिन्दजा ग्राहसंकुला।
भगवते ददौ वर्त्म सा तथा दशरथात्मजायाम्बुधिर्यथा(२९) ॥३४॥
नरपतेः करं दातुमागता रुचिरतत्सरित्तीरमाश्रिताः(IX)।
ददृशिरे ततः शूरसूनुना निशि सनन्दका गोदुहो जनाः ॥३५॥
अथ यशोदया नन्दजायायाऽजनि सुता तदा याऽतिमोहदा।
समुपगृह्य तां कृष्णमार्पयत् स्वभवनन्ततः शूरजोऽगमत् ॥३६॥
विरतमोहया नन्दयोषया शिशुरदर्शि स द्योतयन् दिशः।
उपहसन्नलं नीलमुत्पलं प्रमुमुदे सुतस्निग्धया ततः ॥३८॥
प्रसवमन्दिरे देवकीकरे न्यधित दारिकां शूरजोऽपि काम्(२९)।
श्रुतशिशुस्वना रक्षका जना बुबुधिरे(11a)नृपश्चाचचक्षिरे ॥३९।
प्रसवसंश्रवात्(३१)कंसभूपतिः द्रुततरोत्थितः प्रस्खलद्गतिः।
विगलिताम्बरो मुक्तमूर्द्धजः सपदि सूतिकागेहमाभजत् ॥४०॥

---

२५। द्वारो द्वाराणि बिभिदिरे अपावृतानि।

२६। चिरं नियोगव्यापृततया क्लिष्टा आसन्। धुक्ष धिक्ष सन्दीपनक्लेशनजीवनेष्विति धातुपाठः।

२७। सपन्निद्रया सान्त्रिताक्षकाः (पा)। निद्रया निरुद्धनयना इत्यर्थः। अक्षशब्दः कोषे ज्ञानार्थे पठितो न तु नयनार्थे। समासान्तपदादुत्तरवर्ती शैषिकः कप् समासान्त इति कथञ्चित् समर्थनम्।

२८। उत्तरार्धं न मातृकालिपौ लभ्यते। 'मन्दिरं' 'गिल'दित्यनयो रलयो'यमकानुप्रासदृष्ट्या तुल्यत्वम्।

२९। एतच्च भावतो भाषातश्च भागवतपुराणसंवादि। यथा
'मघोनि वर्षत्यसकृद्यमानुजा गम्भीरतोयौघजवोर्मिफेनिला।
भयानकावर्तशताकुला नदी मार्गं ददौ सिन्धुरिव श्रियः पतेः॥' इति।

३०। कामप्यनिर्वचनीयशक्तिं देवीं भगवतीम्। शूरजः शूरसेनसुतो वसुदेवः।

३१। संश्रवः श्रवणम्। अत्र निहतार्थता पददोषः।

भगवती ततोऽवेक्ष्यतारिणा स्तिमितकुन्तला गर्भवारिणा(३२)।
नवकलेवरेणातिचारुणा शशिकला हसन्तीव चारुणा ॥४१॥
तमवदत्ततो देवकी भिया किमहितं क्रियेतानया स्त्रिया।
तव शरैरपि ह्युत्पलैर्वधे(३३)न मुखमीक्षितुं शक्यते मृधे ॥४२॥
जहिहि मा जहीत्याकुला गिरः स्वसुरसावनादृत्य निष्ठुरः।
स्वयमपोथयद्बालिकां बलाद्दृषदि किं न सम्भाव्यते खलात् ॥४३॥
अथ धृतायुधैरष्टभिर्भुजैस्तुलितभूषिताखण्डलध्वजैः(३४)।
दिवि विदिद्युते सा सुधायुते-(३५)रपि सुशोभनाऽतिप्रभानना ॥४४॥
नवरविच्छविस्वर्णकर्णिकायुगसमुल्लसद्रुक्मकुण्डला(३७)।
भगवती बभौ व्योम्नि सन्मणीमुकुटमुद्रिता(11b)रत्नकुन्तला ॥४५॥
अबिभरीश्वरी विश्वकर्मणा रचितसञ्चितं कञ्चुकं च यत्।
सुरुचि काञ्चनं रत्नसञ्चयैरिदमदीप्यहःसु प्रपञ्चयत(३६) ॥४६॥
अथ शशंस सा कंस शासनं किमकृथा वृथा मे विहिंसनात्।
तव वधं बलाद्यो विधास्यते(३७) समुदपादि स ब्रह्मशासनात् ॥४७॥

---

३२। गर्भवारिणा गर्भोद्गमकाले निःसृतेन वारिणाऽऽर्द्रकुन्तला। च अरुणेति पदच्छेदोऽन्त्ये पादे।

३३। स्वरैरपि (पा)। 'पुष्पैरपि न योद्धव्यं किं पुनर्निशितैः शरै'रित्यभियुक्तानां प्रवचनम्। वधे भाविनीत्यध्याहार्यम्। यदि तावत् संग्रामे भवता मृदुतमाः शरा एव क्षिप्यन्ते तदाऽपि केऽपि न युधि स्थातुं समर्थाः किं पुनर्वज्रकठिनैः शरैर्भेदिनस्तव साम्मुख्यं ते आदध्युः।

३४। आखण्डलध्वज इन्द्रस्य ध्वजोऽतिप्रांशुः, स च तदुत्सवे भूष्यते। अत्र च बाहव आयुधैः संवलिताः।

३५। सुधया युतिर्मिश्रणं यस्य तस्मात् सुधादीधितेश्चन्द्रादिति यावत्। कर्णिका कर्णाभरणम्।

३६। तदहःसु दिवाभागे रत्नसञ्चयैः सुरुचिकाञ्चनं प्रपञ्चयत् सुवर्णज्योतिर्विस्तारयत् अदीपि दीप्तमासीत्।

३७। युगयुगु सकुन्तमन्तला (पा)। मणीति दीर्घान्तोऽपि। सम्मणीति समासाङ्गं पदच्छेदो वा।

यदवधीरधीरावधीरितस्वजनधर्म (३८)मां दुष्ट दुर्मते ।
त्वयि विपातिते स्वानपास्य तेऽखिलमसृङ्मया तेन पास्यते ॥४८॥
इदमुदीर्य साऽगाद्विहायसा सह विड़ोजसा(३९) व्याप्य तेजसा ।
सपदि सर्वतो विन्ध्यपर्वतोपरि परिस्तुत-(४०) स्थानमास्थित(X)॥४९॥
सहसुरैः सुरैः किन्नरैर्नरैः सहचरैश्चरैः स्थावरैर्वरैः ।
स्तुतिपरैः परैरुन्नतैर्नतैरनु-(12a)गुणैर्गुणैः साऽर्चि तैश्च(४१) तैः ॥५०॥
यदुपुरीपतिस्त्वेनयेरिते भगवदुद्भवे ब्रह्मकारिते ।
अतिबली शिशुर्यत्र तद्वधे स्वपुरुषान् रुषा विष्वगादधे ॥५१॥
विदितनीतिनाऽथौग्रसेनिना मधुरवादिनाऽवादि मानिना ।
नयवदादृतं व्याजतोऽमृतं सुरससेवकीभूय(४२)देवकी ॥५२॥
अयि मयि क्रुधं मा कुरु स्वसस्त्वमिह मे गृहे मातृवद्वस ।
तव सुताहतौ दूषणं न नः(४३) स्वकृतकर्मणा बध्यते जनः ॥५३॥
अहह ते सुता ये मया हता भगिनि ते नु वः पूर्वशत्रवः(XI) ।
न खलु ते सुखं ते वितेनिरे(४४)हृदयभेदनं नौ तु चक्रिरे ॥५४॥

---

३८। अधीरः असहिष्णुः। अवधीरितोऽवज्ञातः स्वजनधर्म आत्मीयजने सुलभो ममतारूपो येन। उभयत्र सम्बुद्धिः। प्रथमपादस्थेन यदिति पदेन 'तेने'न्त्यपादस्थतत्पदस्य सम्बन्धः।

३९। विड् व्यापकमोजो यस्य तादृशेन तेजसा। विड़ौजसा इति पाठस्तु न सम्यङ्। विड़ौजा खलु इन्द्रः। अत्र हि प्रकरण इन्द्रस्य देव्या सह आकाशे आविर्भावः पुराणेषु न श्रुतचरः। केनोपनिषद्वर्णितं हैमवतीघटितमाख्यानमत्र कवेर्मनसि प्रतिभातं स्यात्, परन्तन्न लगति।

४०। परिस्तुतानि परिचितानि पुराणादिषु तीर्थत्वेन प्रशस्तानीति वा।

४१। तैश्च तैः सुरनरप्रभृतिभिः सर्वैः सा आर्चि अर्चिताऽभवीत् कर्मणि लुङ्।

४२। अनुगतभृत्यवत् भूत्वा। स तु स्वतो न तथेत्यभूततद्भावे च्विः। देवकी औग्रसेनिना कंसेन अवादीत्यन्वयः।

४३। आहतौ हत्यायाम्। नेयार्थता पददोषः।

४४। वः सर्वेषां भवताम्। ते सुखं तव सुखं ते सुताः कर्तृ वितेनिर इति योज्यम्। नौ जनकजनन्योः।

स्वसृसुतान् शिशून् हिंसता सता बत मयाऽनयाद्दुष्कृतं(४५)कृतम् ।
यदनुबन्धतोऽतिप्रबन्धतोऽजितमिषामिमां(४६)धिग्जिजीविषाम् ॥५५॥
स वसुदेवमप्येवमुक्तवान् परिचरिष्यतो मृष्यतां भवान् ।
मम मृषामनेर्मर्तुमन्तकः क्वचिदभूदमुं वेद हन्त कः ॥५६॥
इति (12b) रुदंस्तयाऽथ मुक्तयोश्चरणयोरपतत् सपत्नयोः(XII) ।
समुपगुह्य तं दम्पती यतौ प्रयतितौ तदुत्थापनाय तौ ॥५७॥
अथ तमुत्थितं तावबोचतां विधिकृतं भवान् नानुशोचताम् ।
अहह नौ शिशोः क्वासि मातुलः(४७) क्व च दरस्त्वदेवोत्तमातुलः ॥५८॥
इति गिरा परं ते परस्परं विहितसौहृदा वैरिणा हृदा ।
निकृतिनिश्चयेऽन्ततः स्थिरे(४८)निजनिकेतनं संप्रतस्थिरे ॥५९॥
मन्दमन्दमथ मन्दिरं गतः [संवृतो] निववृते(४९)स्वकात्ततः ।
चिन्तयन्ननिशमेव केशवं केशबन्धमपि नान्वपद्यत ॥६०॥
आससाद शयनासनाशने चित्तबन्धमसुरेशनाशने ।
तन्मयं जगदबोधि केवलं दृष्टमेवमभिभावके बलम्(५०) ॥६१॥

इति **हरिचरिता**ख्ये नव्यसत्काव्यमुख्ये
प्रसरदमृतधारे वर्णितेशावतारे ।
कृतकलुषनिरासे तुष्टबालाविलासे
जयति जगति गेयः **सर्ग एष द्वितीयः*** ॥

---

४५। अनयात् नीतिविरोधेन। अनयादुष्कृतं···(पा)।
४६। जितं मिषं छलं यया तामिमां जिजीविषां जीवितुमिच्छाम्।
४७। द्वौ 'क्व' शब्दौ महदन्तरं सूचयतः। उत्तम उत्कटोऽतुलोऽसाधारणो दरो भयम्।
४८। निश्चयेऽत्यतश्छिरे (पा)। मनसि निग्रहसंकल्पेऽन्ततः परिणामतः स्थिरे स्थिरीकृते।
४९। मन्दिरं गतो निरवृते न कंसः (पा)। अस्मिन्ननन्तरे च श्लोके रथोद्धता वृत्तम्।
५०। अभिभावके स्वप्रभावं तिरस्कुर्वति बलं शक्तिर्दृष्टम् उपलब्धमेवेत्यैकान्तिभक्तवत् कंसस्य भगवति भावो दर्शितः।

# हरिचरितम्

## तृतीयः सर्गः

(13a) वसुदेव एवमुदितो मुदितो विहितेऽहिते शिशुशुभे शुशुभे ।
अमरेशकेशवरतो वरतो भवनाद्वनादिव दिवोद्विविजे(१) ॥१॥
स ससार सारतरसातरसा तरसा रसाहितनयं तनयम् ।
हरिमीक्षितुं श्रमभरात्मभरादबलोऽवलोकनमना(२) न मनाक् ॥२॥
यमुनाऽमुनाऽतरिरतारितरां त्वरया(३) रयानिलमिलत्सलिला ।
मधुरेक्षणक्षणविलक्षणतः[सफलं] फलं किमिति पूर्णमतः(४) ॥३॥
स ननन्द नन्दसदने [सदने] सदनेकलोकचयमाकलयन् ।
नवनीलरनीरजपलाशदृशा सदृशा सहाथ विधुना विधुना ॥४॥
भगवन्मुखेक्षणरसप्रसितं स ददर्श कञ्जदृश-(६)मुल्लसितम् ।
द्विजदेवताऽर्चनपरं नपरं वसुवर्षिणं व्रजपतिप्रवरम् ॥५॥

---

१। अत्र सर्गे प्रमिताक्षरा प्रधानं वृत्तम्। अमरेशे देवश्रेष्ठे भगवति केशवे रतो भक्तिमान्। वरतः श्रेष्ठात् भवनात् वनादिव दिवा दिने उद्विविजे इति योजना।

२। सारतरे श्रेयसि साते शुभे रस आकूतं यस्य। श्रमभयात् समयादबलो···(पा)। श्रमभरात् परिश्रमातिशय्यात् आत्मभरात देहभारादबलो दुर्बलः।

३। अतरिर्नौर्विहीना यमुना त्वरया सत्वरमतारितरां सुखेन तीर्णा। तरादामुस्तिङन्त्रम्। न पुरया रया (पा)।

४। फलं किमिति पुण्यजना···(पा)। मथुरादर्शमात्स्वरूपात् विशिष्टादतः पूर्णमिति पूर्णतरमिति यावत्।

५। सदने आलये न तु स्वावासभूतकारायामिव निर्जने स्थाने। 'अनेक''चय'-पदाभ्यामर्थपौनरुक्त्यम्। नन्दसदनं व्रजभूमिः। अनेके असंख्या लोकचया ब्रह्मादिमयानि भुवनानीति विदग्धानां समाधानम्। नवनीलं नीरजं पद्मं तस्य पलाशं पत्रमित्यादि घटना। एवं विधुना केशवेन विधुना चन्द्रेणेति व्यस्तरूपकम्। 'विधुश्चन्द्रोऽच्युत' इति हैमे।

६। कञ्जदृशं पद्मलोचनम्। कन्ददृशम्···(पा)। न नास्ति परः श्रेयान् यस्मात्तादृशम्।

समपूजि पूजिततमः सुधिया समये नयेन स तु शूरसुतः ।
सुतरान्तरान्तरमुदामयं किमु गर्हमर्हति धनैरसुतः(?) (७) ॥६॥
अथ स व्रजाधिपतिमालपति(13b) स्मितपूर्वकं स्म(८)सुखितोऽस्मितराम् ।
तव नन्द नन्दनमुदीक्ष्य सुतं शुभलक्षणोऽयमविता हि धराम् ॥७॥
समयोपनीतमिममाशु सुतं महताऽऽदरेण परिपाहि पिता ।
तव सर्वथा परभृतो(९)वयसः परिणाम एष खलु पालयिता ॥८॥
समवर्षि वर्षिक-(१०)करप्रकरो नृपकोषसागरे वरे भवता ।
तदलं विलम्ब्य बलवत्सविधे प्रतिगम्यतां तनयेन भवता(II) ॥९॥
मम रोहिणीजठरजश्च सुतः सततं व्रजेऽयमिह नन्दरतः ।
भवताऽपि निजात्मधिया कलितः परिपाल्यतामनुवनं(११)दरतः ॥१०॥
ननु सूनुशैशवविनोदभवं सुखमाप्नुयाः प्रभुविनोदभवम् ।
यदिमं नृशंसतमकंसभयादहमादधे न मम कं सभयात्(१२) ॥११॥
इति सत्यसेविवसुदेवगवीरससारसंग्रहमपारयतः ।
धरणीचरव्रजवराधिपतेर्ववृधे विधौ(१३)सुतकृपा रयतः ॥१२॥

---

७। असुतः स्वकीयतनयाद् भिन्नोऽपि । तदन्यतेत्यर्थे नञ् समासः । किमु गर्हमर्हति किं निन्दाभाजनं भवतीति काकुः । आन्तरमुदां हार्दिकप्रमोदानां सुतरान्तरमयमतीवान्तःस्थ इति क्लिष्टयोजना । धनैर्हेतुभिः ।

८। आलपति स्मेति योजना । विसदृशो विन्यासः । अस्मितरामिति तिङि आमुयोगः ।

९। पिता सन् परिपाहीत्यन्वयः । परमन्यं स्वसुताद्व्यतिरिक्तं बिभर्ति यस्तस्येति क्विप् । तवेत्यस्य विशेषणम् ।

१०। 'कालात ठञ्' इति वार्षिकमेव स्यात् । अत्र यमकानुरोधेन कृतं वर्षिकमिति पदं चिन्त्यम् । बलवत्सविधे पराक्रमवतां सामीप्ये ।

११। भवता रिजात्मधिया (पा) । अनुवनं वनमभिलक्ष्य विहरन् दरतो भयतः परिपाल्यतामित्यन्वयः । त्राणार्थादपादानसंज्ञा ।

१२। प्रभुविनोदभवं भगवल्लीलाकलितम् । इमं मम कं सुखात्मकमानन्दनं नन्दनमहं कंसभयात् त्वत्सकाशमादधे । भयादिह नादधे न (पा) । शैशवविनोदः शिशुजनोचितक्रीडा ।

१३। गवी वाक्यम् । इति वसुदेववाक्यस्य तात्पर्यग्रहेऽशक्नुवत इति प्रथमार्धाशयः । विधौ केशवे सुतकृपाऽऽत्मजवात्सल्यं रयतो वेगेनातितरामिति यावत् ववृधे ।

अथ तूर्णमेव परिपूर्ण-(14a)मना गमनाय कंसनृपकं(१४)समये ।
अनुमान्य मान्यसचिवावपि स व्रजमव्रजद्धृदि विलासमये ॥१३॥
स कुमारवाह्यशिविकाशयितं हरिमात्मनोऽतिशयितं दयितम् ।
समवेक्ष्य साकममुना यमुनातटवर्त्मनाऽगमदमन्दमनाः(III) ॥१४॥
वरयौवनं सुमनसां भवनं स ययौ वनं मृदुनदीपवनम् ।
अविलम्बनं श्रमसमालवनं(१५) सुखभावनं बहुगवामवनम्(IV) ॥१५॥
अलिसङ्कुलं स्फुटलतामुकुलं तदनाकुलं विरुतपत्त्रिकुलम् ।
रसवज्जलं बहुलभक्ष्यफलं मुमुदे स वीक्ष्य शुचिवृक्षतलम् ॥१६॥
अथ कुञ्ज[गुञ्ज]दलिपुञ्जघने(१६) मृदुमञ्जुमञ्जरिणि(१६)तत्र वने ।
स तुतोष घोषमवलोक्य परं बहुयोजनायतविहारपरम् ॥१७॥
तरुणाकृतेन(१७)तरुणा गुरुणा क्रियमाणमत्र चरमावरणम् ।
परितो विलोक्य परितोषमगात् स यथाविभागमपि गेहगणम् ॥१८॥
अधिगोविवर्धनगिरि-(14b)प्रवर-(१७)प्रचरन्मयूररवसंवलिते ।
स बबन्ध गीतनिकरेऽतिरतिं वरवल्लवैरतिरसं(१८)वलिते ॥१९॥
नवयौवनाः स्तनयुगाग्रघनाधिकसन्निबद्धविलसद्वसनाः ।
स्थिरमस्तकस्थितपयःकलसाः कलयाम्बभूव स तदाऽनलसाः(V) ॥२०॥
दधिमन्थमन्थरगतीर्युवतीरुदयत्सुधामधुरगीततती: ।
परिवृत्य नृत्यमिव सन्दधतीः स ददर्श मन्थरवतालवतीः(१९) ॥

---

१४। नृपकं तुच्छार्थे क-प्रत्ययः। हृदि विलासमये—छलितेन मनसेति यावत्।

१५। अविलम्बनं सत्वरं यथाविति सम्बन्धः। श्रमसमालवनं सद्य एव दुःखविच्छेदि। लू छेदने युच् नन्द्यादित्वाल्ल्युर्वा। बहुगवामवनमनेकगोपालकं गोष्ठम्।

१६। अलिपुञ्जैर्घने संकुले वने। मञ्जरिणि व्रीह्यादित्वादिनिः। तृतीयपादे परमत्यर्थमित्यर्थे।

१७। स्वल्पाकारेण न तु वटाश्वत्थादिवदतिप्रांशुनाऽतिविशालाकारेण च।

१८। गोवर्धन इति रूढौ गो-विवर्धनेत्यत्रावाच्यवाचनं दोषः। वल्लवैर्गोपैरतिरसमतिमधुरं वलिते विहिते गीतनिकरे।

१९। 'आमन्द्रमन्थध्वनिदत्ततालं गोपाङ्गनानृत्तमनन्दयत्तम्' इति भट्टिपद्यमत्र प्रकरणे तुलनीयम्।

नवनीतपाकभवगन्धहरैर्यमुनातरङ्गहतिभङ्गधरैः ।
अभिवासिताखिलवनोपवनैः समशोभि सद्रसहरैः पवनैः ॥२२॥
सदुपायनोपनयनैः स्वजनैः स तदा मुदा विहितसंवदनैः(२०) ।
हरिवीक्षणोद्भवरसोल्लसितैः सहितो जगाम निजधाम हितैः ॥२३॥
अथ रोहिणी परिगृहीतनया तनयान्विता वसति यत्र गृहे(VI) ।
तदकल्पताच्युतनिवासतया[स]तदा[तया]स्वसुतवज्जगृहे(२१) ॥२४॥
सह-(15a)रौहिणेयमभिवीक्ष्य हरिं विममर्श हर्षतरलं व्रजभृत् ।
किमिमौ हिमांशुतपनाववनौ किमु मायिनौ वरुण[वैश्र]वणौ ॥२५॥
परमेकदाऽङ्कमनुमृज्य हरेर्जननी मुदाऽञ्जितवती नयने(२२) ।
स्तनपानसञ्जनितनिद्रमधः शकटस्य शायितवती शयने(VII) ॥२६॥
इदमीषदेव(२३)जलशौचकृते यमुनां प्रति प्रसितया प्रसृते ।
स पयः पिपासुरतिबालतया मधुरं रुरोद बुबुधे न तया ॥२७॥
इदमुत्पतत्पदपयो[जतटं] युगपद्बभञ्ज सघटं शकटम् ।
स्मरणाद्विनश्यति मलं प्रबलं(२४) किमुताभिघातमिह कुर्वदलम् ॥२८॥
विपरीतभूमिपतितं तदनश्चकितं चकार सकलस्य मनः ।
बहुकुण्डभाण्डचयभङ्गभवः समपूरयद्दशदिशो हि रवः ॥२९॥
समियाय तत्र परया त्वरया व्रजवासिनां परिकरप्रकरः ।
सशिवोऽस्तु नन्दशिशुरित्यसकृद्भगवत्कृताभिनयनैकपरः(२५) ॥३०॥

---

२०। संवदनं संवादः—अत्र मेलनम् । हितैः शुभानुध्यायिभिरिति यावत् ।

२१। स कृष्णस्तस्या रोहिण्या सुतवत् निजतनयवत् ।

२२। मुदा आनन्देनाञ्जितवती साञ्जने कृतवती । सञ्जनितनिद्रं कृष्णमिति शेषः 'विशेषणमात्रप्रयोगो विशेष्यप्रतिपत्तौ'रित्यनुशासनात् ।

२३। इदमत्र प्राप्यं जलमीषदेवेति यद्वा मया त्वधुनैव आगमिष्यत इत्यल्पमेव कालं तं विहाय गतेति कथञ्चित् कवेराशयोऽवधेयः । बन्धनीगर्भवाक्यवदिदम् ।

२४। ···नर्व्वमघचयं धुवलं···दुष्यदलं(पा) । स्मरणमात्रेणैवाघातकथाऽऽस्तामित्याशयः ।

२५। भगवदद्भुताभिनयैक (पा) । भगवता ईश्वरेण कृतमभिनयनं लीलाप्रदर्शनं तत्परः श्रीकृष्ण इत्यर्थः ।

उपलभ्य तं कुशलिनं(15b)सज्जनो मुदमाप्तवानहह तां स तथा।
बहुजन्मसेवितसमाधिबलं [प्र]विलोक्य सन्निह(२६) लभेत यथा ॥३१॥
महिलाश्च काश्चन ततश्चलिताश्चपलं कलिन्दतनयां प्रति ताः।
अवभर्त्स्य नन्दगृहिणीं सकलं जगदुर्मुकुन्दमपि चाविकलम् ॥३२॥
अथ ताभिरेव सहसा गृहमा गतवत्यसावुपनिधाय सुतम्।
प्रददौ स्तनं स्वयमुनागमनं बहुशो निनिन्द च चुचुम्ब च तम् ॥३३॥
सह गोभिरत्र समये वनतः समुपागतो भयभरावनतः(२७)।
व्रजपालकः शकटभङ्गकथामश्रृणोदधश्च हरिरास्त यथा ॥३४॥
सहधर्मिणीमयमपृच्छदनः(२८)कुत एतदत्र पतितं वद नः।
इयमाह वेद न हि हेतुमये यमुनां गताऽस्मि खलु तत्समये ॥३५॥
शिशवस्तु वस्तु तत्तदाजह्रिरे(२९) वयमास्महे स्म भवतामजिरे।
स्तनलिप्सुरेव शिशुरेव रुदन् पदमुत्क्षिपन् शकटमेतदहन् ॥३६॥
[नतया तदा] वचनमागदितं शिशुभाषितं परमथा (16a)नुचितम्।
क्व शिरीषतो मृदु कृष्णपदं क्व च वज्रवद्दृढमनस्तदिदम् ॥३७॥
स हतोऽसुतोऽपि परमः प्रिय इत्युपगुह्य मन्त्रमजपद्व्रजपः।
तमभिस्पृशन् स सकलाङ्गचये हरिनामभिः समनु तद्रुचये(३०) ॥३८॥
व्रजपेन गोशकृदथालिलिपे शुभकारि कृष्णनिखिलापघने(३१)।
शकटश्च पूर्ववदकारि मुदे समपूजि एष अभिलापघने ॥३९॥
इति लौकिकातिशयितं चरितं विविधं विदर्शयिषुणा हरिणा।
प्रथमं तथा पृथुरकारितरां पृथुकक्रियां श्रृणुत तामितराम् ॥४०॥

---

२६। सन् साधुरिहास्मिन् जन्मनि।

२७। भयाभरावरत (पा)। भयभरेण त्रासातिशय्येनावनतोऽवसन्न इति यावत्।

२८। एतदनः शकटं कुतोऽत्र पतितमिति सहधर्मिणीं यशोदामपृच्छदिति योजना।

२९। आजह्रिरे व्याजह्रिरे ऊचुरिति यावत्। तत्तद्वस्तु तां तां घटनां कर्मपदम्। अवाचकत्वं दोषः। 'प्राप्य नाभिह्रदमज्जने'ति माघप्रयोग इव ह्कारसंयोगपरे ह्रस्वत्वं समाधेयम्।

३०। समनु समनन्तरं तद्रुचये तस्य प्रीतिविधानाय हरिनामभिरभिस्पृशन्मन्त्रमजपदिति योजना।

३१। अभिलापघने स्वस्त्ययनार्थं कृतेन मन्त्रोचारणेन व्याप्ते निखिलापघने सर्वाङ्गे।

निशि सुप्रसुतभगवज्जननीशयनीयतोऽङ्कमुपनीय हरिम् ।
स्तनमाशु कंसभगिनी शकुनी बत पूतना गरमपीप्यदरिम्(३२) ॥४१॥
ग्रसदन्तकं स्म समुदारमतेरवनेऽवनेरिति(३३) मनो रमते ।
स्तनपानचीत्कृतित एष तदा ह्यसुभिर्व्ययुजदिमां स मदात् ॥४२॥
निपपात भिन्नहृदया धरणौ सहसा प्रसार्य खचरी चरणौ ।
उदित-(16b)स्वना व्रजविहारिजना बिभयाम्बभूवुरभितो रुरुवुः ॥४३॥
समजिह्मलल्लह्वलमार्तिचलाः(३४) प्रचकाशिरे दश दिशो विमलाः ।
भुवि पूतनां निपतितां ददृशुः कुशली तदाऽयमुददर्शि शिशुः ॥४४॥
स यशोदया भृशदयाऽऽकुलया कलयाम्बभूव उपजात इव(३५) ।
पुनरात्मनः स्तनममुष्य मुखे निदधेऽतिबन्धधृति सा प्रमुखे(३६) ॥४५॥
अननन्ददिन्दुरिव नन्दमयं विपदं प्रतीर्य गतवानुदयम् ।
अभिसंदधत् सुतपदाभ्युदयं स ददौ द्विजाय धनरत्नचयम् ॥४६॥
इति पूतनावधकृतातिदरा-(३७)द्विधुरा किमेतदिति गोपवराः ।
सकलापदम्बुधिसन्नतरणं प्रययुर्मुकुन्दचरणं शरणम् ॥४७॥
शिशुरेवमत्र शिशुवत् कुहितं(३८)प्रविधाय गोपशिशुभिः सहितम् ।
अवगम्य राममुदितं मुमुदे बुबुधे हरिस्तदुपजीविमुदे ॥४८॥

---

३२। पूतना हरिं कंसवैरिणं कृष्णं गरं विषमपीप्यदपाययत् । पाययतेलुङि रूपम्—णौ द्विकर्मता । शकुनीति स्त्रियाम् ।

३३। सदुदारमतेः शोभनमङ्गलधियो भगवतो मनोऽवनेः पृथिव्या अवने रक्षणे अन्तकमन्तकृतं यममपि ग्रसत् कबलयत् रमते स्म ।

३४। आदौ पूतनाकर्तृकास्कन्दनकाले आर्त्या विपत्सन्निपातेन चला विह्वलविमूढा दिशस्तदधिष्ठात्र्यः पश्चात् पूतनावधादनन्तरं समाभिर्जिह्माभिर्जिह्मापरिवृत्त्यभावात् सहजविकाशमयीभिस्ताभिर्ललल्लीलाप्रकटं बलं स्वकीयमोजो यासां तत् यथा स्यात्तथा । विमलाः सत्यः प्रचकाशिर इति योजना ।

३५। स कृष्णः । स कलयाम्बभूवे दृष्ट इति यावत् । कर्मणि लिट् । उपजात इव प्रत्यागतजीवित इवेति यावत् ।

३६। सा यशोदा । प्रमुखेऽग्रे । अतिबन्धधृति शिशुस्वभावतो दृढं यथा स्यात्तथा धृतम् । 'अनिदधेऽपि बन्धधृति' इत्यतत्स्पष्टः पाठः "मा" लिप्याम् ।

३७। अतिदर आतङ्कः । कृताकलया (पा) ।

३८। कोः पृथिव्या हितम् । राममुदितं ज्येष्ठभ्रातुर्बलरामस्य हर्षम् । भावे क्तः ।

भुवि मुग्ध ईश्वर इति प्रवरश्चरविन्दलोचन उदारमतिः।
व्रजगोशकृद्भिरनुलिप्ततनुः सहरामकः किल मुदाऽऽरमति(३९) ॥४९॥
इदमीयवक्षसि घनप्रतिमे बहुगुञ्जकाकलितदाम यथा।
तड़िदुज्ज्वलद्युति चलद्विबभौ किमु मौक्तिकावलिरपीह तथा(४०) ॥५०॥
मणिशातकुम्भकृतमाभरणं बिभराम्बभूव यदयं सदयम्।
सुरसाऽतिसुन्दरवपु-(४१)र्भगवा-ञ्जिह्रयाञ्चकार(४२) तदलं सकलम् ॥५१॥
शिशुलीलयाऽजिरविहारपरं परमं पुमांसमपि मांसदृशः।
शिशुरित्यवेत्य सततं जुगुपु-र्जगति त्वमुच्यततमां(४३)सद्दृशः ॥५२॥

---

३९। मुदा आनन्देन आरमति क्रीड़ते किलेति योजना।

४०। घनप्रतिमे मेघोपमे इदमीयवक्षसि अस्य कृष्णस्योरसि बहुभिर्गुच्छसन्निविष्टै-र्गुञ्जकैराकलितं दाम माला चलत् सञ्चरमाणं विद्युत्प्रभादीप्तं यथा बभौ न तथा कृत्रिमा मौक्तिकावलिरपि भाति। वङ्गीयवैष्णवपदावलीसाहित्ये गोष्ठलीलारतस्य श्रीकृष्णस्य वर्णनं "गोठे गोचरगूढ़ गोपाल। ···गोपीगोपकगोकुलगाम-विहारी। गुञ्जागैरिक गोरसरञ्जित गोरोचनरुचिधारी॥ समवयवेश-केशपरिमण्डित चूड़े शिखण्डककुसुम उजोर। मणिमयहारगुञ्जानवमञ्जुल हेरइते जगजनमन करु भोर॥" इत्यादि वर्णनमेतत्प्रकरणे (४९-५२ श्लो ) तुलनीयम्। 'मुग्ध ईश्वर' (४९ श्लोः) 'शिशुः' (५२ श्लो) इति पदे चोद्धृतपदावलीबन्धे "गूढ़ गोपाल" इति पदेन समकक्षे।

४१। सुरसया तदाख्यया दीप्तिमत्या वल्ल्याऽतिसुन्दरं वपुर्यस्य। "नाकुली सुरसा वाल्ना सुगन्धा गन्धनाकुलीति" वनौषधिवर्गेऽमरः। 'सुरसा त्वोषधिभिर्दीप्ति'रिति हेमचन्द्रः। सिन्धुवारपर्यायोऽयमिति केचित्। सुरसावर्णने 'यह वङ्गदेशके प्राचीन आम आदिके पेड़ पर पैदा होती है।···इसका फल पीला बैगुनी और छीटेदार होते है।' इत्यमरकोषे हिन्दीभाषाविवरणं (९३ पः) स्मरणीयम्। (M. Manimala Series No. 85) सुरसा "a kind of jasmine" (Monier Williams. S. E. Dict ) इत्येवंस्थिते द्वे मन्तव्ये श्लोकस्थ-भावानुयायिनमाकल्पमेव सूचयतः। 'सुरसा स्त्रीपर्णास' इति च शब्दरत्नावली तुलसीत्यर्थे इत्यपि तु प्रकरणतो नासङ्गतं विवरणम्।

४२। तत्सकलमलमत्यर्थं जिह्रयाञ्चकार लज्जापितवत्। णिचि लिट्। पूर्ववत् ह्कारसंयोगपरे ह्रस्वत्वम्।

४३। सद्दृशः प्रकृततत्त्ववेत्ता तु जगति अमुच्यततमां तदुपलब्ध्याऽतिशयेन मुक्तो बभूव।

यदुवृन्दवन्द्यतमगर्गमुनि-र्निभृतं द्वयोरकृत नाम तयोः ।
प्रथमस्य राम इति कृष्ण इति त्वपरस्य चापि सुमना मतयोः(XI) ॥५३॥

जननी कदाचिदमुमङ्कगतं पुनरुत्क्षिपन्नथ पुनर्दधती ।
सहसैव मेरुवदतीव गुरुं धरणौ दधेऽद्भुतविमर्षवती(४४) ॥५४॥

अथ वात्ययाऽव्रियत सा व्रजभूस्तलतूलधूलिपटला-(17b)कुलया ।
सुदृढाऽपि गोपनिलयालिरलं सकला बभूव विकलाऽऽकुलया(४५) ॥५५॥

दशदिक्षु मङ्क्षु रजसा तमसा बत संयुतासु वसुधाऽऽववृते(४६) ।
न बभौ व्रजे किमपि नापि रवि-र्भुवि लोचनस्य विषयो ववृते ॥५६॥

अभवत् क्षणेन पवनोपरमः सरजस्तमोऽप्युपशमः परमः ॥
प्रससार भा नयनयोरनयोरनु गोचरेऽपि पथि भासनयोः(४७) ॥५७॥

सुनिरीक्ष्य नन्ददयिताऽथ हरिं विललाप खिन्नहृदया झटिति ।
बत(४८) वातमण्डलिकयाऽपहृतः श्वसिति स्म कुत्र मम पुत्र इति ॥५८॥

इति वाक्यसंश्रवणप्रवणाः परितो विचिक्युरनु गोपगणाः ।
उपलेभिरे न तु हरिं त इमे व्यरमन् कुयोगिन इवोपशमे(४९) ॥५९॥

---

४४। अद्भुतं विस्मयो विमर्षश्चिन्ताभारश्च, तद्वती ।

४५। सुदृढा दृढनिर्मिताऽपि सकला समग्रा गोपनिलयालिर्व्याकुलया विप्लवकारिण्या वात्ययाऽलमत्यर्थं विकला बभूव । धूलिपटलाकुलया धूलिराजिसङ्कुलयेत्यर्थः ।

४६। बत मम्युत्य सु बहुभाववृते (पा) । दशसु दिक्षु धूलिनाऽन्धकारेण च संयुतासु आवृतासु वसुधा व्रजभूमिराववृते घूर्णायमाणेवासीत् । बतेति खेदे । एवमपि पुराणाख्याने ।

४७। एवमनुलिप्यां पाठः । "अनुदात्तेतश्च हलादेः" (पा ३।२।१४९) इति भास दीप्ता-वित्यतो युच् । नयनयोर्गोचरे पथि वर्त्मनि प्रकाशकयोर्भा दीप्तिरनु प्रससारेत्यन्वयः ।

४८। बतेति पादादौ शब्दचित्रे क्वचिद समाधेयः । वातमण्डलिका वात्या । अनुरित्थम्भूताख्याने कर्मप्रवचनीयः । नयनयोर्भेति सम्बन्धे षष्ठी ।

४९। कुयोगिनो योगाभासपरा उपशमे तथाकथिते व्युत्थाने यथा योगतो विरमन्ति तद्वत् ।

स हि कंसशंसितमनुस्मरता दितिजेन वायुवपुषाऽह्रियत(XII)(५०)।
गगनेऽथ कुञ्चितगतिर्हरिणा परिपीड्य किञ्च हहहा-(५१)ऽक्रियत ॥६०॥
(18a)गलमस्य बाहुयुगलेन हरिः परिर[भ्य](५२)निर्भयमितस्त्वदयम्।
असुरो जहीति जहिहीति परं विरुराव न त्वलभतात्युदयम् ॥६१॥
अथ विश्वभारभरमाहरता(५३) हरिणा निपीड़नमुपाचरता।
अयमस्फुटाक्षरपदं विरुवन्नसुभिर्व्यमुच्यत ख एव चरन् ॥६२॥
तमरुन्ध विन्ध्यमिव बन्धुगवामवनाय तत्र पतने भगवान्।
व्रजतोऽति दूरतरदेश इमं प्रसभं व्यपीपतदुदारतमम्(५४) ॥६३॥
पततोऽस्य निस्वनमसावधिकं शतकोटि[तोऽपि](५५) शतकोट्यधिकम्।
श्रवणोद्विजं व्रजजनः श्रुतवान् कुत एतदित्यनु च तं गतवान् ॥६४॥
ददृशेऽमुनोपहसितोरुगिरिः(५६) पतितोऽसुरोऽस्य गल एव हरिः।
सपदि स्फुरन् कुशलवानुपरि द्रुतमादधेऽधिकमुदं पितरि ॥६५॥

---

५०। दैत्यो नाम्ना तृणावर्तः कंसभृत्यः प्रणोदितः। चक्रवातस्वरूपेण जहारासीन-मर्भकम् ॥ इति भागवतपुराणाख्यानमनुसृत्य वस्तून्यासोऽत्र श्लोकार्धे। 'कंसशंसितमनुस्मरत' इत्यस्य 'कंसभृत्यः प्रणोदित' इति वर्णनं बीजम्।

५१। हहहेत्यव्यक्तनादानुकरणे। तृणावर्तो हहहेत्याक्रोशं कृतवानित्यर्थः। हहहा-ऽक्रियत इत्यत्र 'अनुकरणं चानितिपर'मिति गतिसंज्ञया 'कुगतिप्रादय' इति समासः। अत्र क्रियांऽशे अन्तर्भावितणिजर्थो बोध्यते।

५२। तु पक्षान्तरे अदयमनुकम्पारहितं तत् यथा स्यात्तथा निर्भरं गाढं परिरभ्य इतोऽगच्छदिति योजना। यद्वा निर्भयमतिस्तदयमिति पाठः। अयमिति एषोऽहम् इतिवत् प्रयोगः। तत् तस्मात् परं किन्तु। आदौ 'जही'ति पश्चादवस्थावैपरीत्येन 'जहिहि' मां मुञ्चेति विरुराव।

५३। 'आहरता' हरतेत्यर्थे पूर्ववदवाचकत्वं दोषः।

५४। उदारतममतिनिपुणं यथा स्यात्तथेति।

५५। शतकोटिर्वज्रं "ह्लादिनी वज्रमस्त्री स्यात् कुलिशं भिदुरं पविः। शतकोटि"रित्यमरः। शतकोट्यधिकं शतकोटितोऽप्यधिकयाऽमितया संख्ययेति परिमाणवचनम्। उद्विजमुद्वेजकम्। विजेः 'श'प्रत्ययः।

५६। उपहसित आकारपरिमाणेन धिक्कृत उरुर्महान् गिरिर्येनेत्यसुरविशेषणम्।

उपगुह्य पुत्रमतिमात्रमुदा गिलितं यमेन स यथाऽऽगलितम्(५७)।
व्रजमाजगाम सहितः स्वजनैरकृतोत्सवञ्च शिवसंवलितम् ॥६६॥

(18d) तृणावर्तं दैत्यं भुवि भगवता पातितमिमं
समीक्ष्याथो गोपा व्रजपतिमिति स्माभिदधति।
सुदीर्घायुः शन्दन्तव तद्-(५८)पत्यं प्रतिपदं
विपद्भ्यः [सन्त्राता] स्वयमपभयो लभ्यत इति ॥६७॥

इति **हरिचरिता**ख्ये नव्यसत्काव्यमुख्ये
प्रसरदमृतधारे वर्णितेशावतारे।
कृतकलुषनिरासे तुष्टबालाविलासे
व्यरमदमलमेयः **सर्ग एवं तृतीयः** ॥*॥

---

५७। यमेन गिलितं ग्रस्तुमारब्धं पश्चात् आगलितमुद्गीर्णं। यथेत्यत्र साद्दश्यस्खलितमिति वा। सम्भावनाद्योतकम्। यममुखात् प्रत्यानीतमिवेत्यर्थः। यमस्य व्यादत्तमुखवर्णनं प्रसिद्धम्। श्रीमद्भगवद्गीतासु विश्वरूपदर्शने कालरूपिणो भगवतो 'वक्त्राणि ते त्वरमाणा विशन्ती'त्याद्यनुरूपं वर्णनमुपलभ्यते। 'पुत्रमानथ जीवन्तं मुक्तं मृत्युमुखादिवे'त्यन्यत्र प्रकरणे हरिवंशवर्णनम्।

५८। सुदीर्घायुः स्पन्दस्तव बत पात एव···(पा)। शन्दं कुशलविधातृ। द्वितीयपादे इतीत्येवं प्रकारेणेत्यर्थः। सन्त्रातेति लुट्। अपभयो लभ्यत इत्युत्तरार्धे योजना। द्वौ 'इति' शब्दौ पुनरुक्तिभ्रान्तिं सूचयतः। वस्तुतस्तु इत्यभिदधति स्मेति पूर्वार्धे, द्वितीयार्धे इति इति हेतोरित्यर्थे। प्रतिपदं पदे पदे सर्वासु विपत्सु। स्वयमपभयोऽतितरां निर्भीकप्रकृतिः। शिखरिणी वृत्तम्।

# हरिचरितम्
## चतुर्थः सर्गः

एवमिष्टपरिपालनशीलः श्रीधरः श्रितनरात्मकलीलः ।
(१)शुद्धचन्द्रदिवसेऽतिविलासी सूषितः पितृमुदेऽधिकमासीत् ॥१॥
नन्द आदरभरेण सदारः स्वेच्छयोत्सवमतीव चकार(I) ।
संप्रपूज्य सुमनःसमुदायं स्वागतादिभिरदाद् बहुदायम् ॥२॥
गोपवेश्मसु चचार स कृष्णः स्वासुतुल्यशिशुसङ्गसतृष्णः ।
वल्लवीभिरनुरागयुताभिः शोभमानवदनो मुदिताभिः ॥३॥
यत्र यत्र सदने(19a) सहरामः क्रीड़ितुं शिशुभिरेव जगाम ।
तत्र तत्र निजकर्मनिरतस्य प्रैक्षत(२) व्रजवधूर्मुखमस्य ॥४॥
सिञ्चतीव सुधया दृशमोघै-(३)रीक्ष्यमाणवदनेन्दुरमोघैः ।
लिम्पतीव मृदुचन्दनपङ्केनाङ्गमेव निहितं शुभमङ्के ॥५॥
वत्सवत् स समुपेत्य सबालैः रामराम(४) रजसामथ जालैः(II) ।
वत्सवत् स हतनादसहर्षः पुच्छगुच्छमनु तस्य चकर्ष ॥६॥

---

१। अत्र सर्गे स्वागता मुख्यं छन्दः। शुद्धचन्द्रदिवसे ज्योतिर्विद्भिरनुमोदिते चन्द्रशुद्ध्यादिसहिते दिने। सूषितः सुखप्रथमनिवासः।

२। व्रजवधूर्गोपीजनः।

३। अमोघैः सर्वथा सार्थकैरोघैः परम्पराभिर्दृशं सुधयेवैष नन्दः सिञ्चतीवेत्यन्वयः। 'ओघो वेगे जलस्य च। वृन्दे परम्परायाम्'मिति कोषः।

४। 'रामरामे'ति 'हरि हरि' 'शिव शिवे'तिवत् पादपूरणप्रायो निपातः। रजसां जालैरुपलक्षितैर्धूलिधूसरैर्बालैः सह वत्सवत् तर्णक इव स हतनादसहर्षो नवजातगोवत्सकृतहाम्बानादेनोल्लासितः। एवमपि विष्णुपुराणे 'गोवाटमध्ये क्रीड़न्तौ वत्सवाटगतौ पुनः। तदहर्जातगोवत्सपुच्छाकर्षणतत्परा'विति। आद्ये पादे वत्सवत् शिशुरिवेत्यर्थ।

क्रीडितश्च रजसि प्रणिधाय ग्रामधामनगरादि(५) विधाय (III)।
भुञ्जता स्फुटमकथयत चित्रं तेन दुर्नयकृतं स्वचरित्रम् ॥७॥
कल्पशेषसमये निजकुक्षौ क्षेप्स्यति क्षितिमिमां किल कृत्स्नाम्।
बालकेलिविधिना तदधीशः ख्यापयन्निव चखाद स मृत्स्नाम्(६) ॥८॥
कोऽपि गोपशिशुरेत्य तदम्बामुक्तवानिदमसावखिलं वा(७)।
आगताऽऽख्यदथ कृष्ण कथं त्वं हा चखादिथ मृदं वद तत्त्वम् ॥९॥
तामवोचत हरिर्मृदुवादः क्वाहमम्ब मृदमत्र चखाद(८)।
पश्य मे वदनमित्यददर्श-(9b) चित्रमत्र जननी च ददर्श ॥१०॥
भूमिभूधरनदीनदसिन्धून् गोकुलान्तसहितान्(९) निजबन्धुन्।
सार्कचन्द्रगगनं परमं वाऽदर्शदेतदुदरे परमम्बा ॥११॥
इत्थमद्भुततमानुभवोऽथ स्पष्टतत्त्वमतिलूनममत्वाम् (१०)।
मातरं प्रति ततान मायां वैष्णवीं प्रणिहिताखिलतत्त्वाम् ॥१२॥
विस्मृतामिततदद्भुतसत्ता सा सहस्रगुणभूतममत्वा।
कृष्णमात्मभवनं प्रति निन्ये स्वस्ववेश्म शिशवो ययुरन्ये ॥१३॥
एकदाऽथ दधिमन्थविनोदात्कौरये स्तनमदान्नु यशोदा।
कोपितः स दधिभाण्डमभाङ्क्षीदच्युतस्तत इतः स्तनकाङ्क्षी(V) ॥१४॥

---

५। एवं ग्रामधामनगरादिविधानं डिम्भचरितं स्वभावोक्त्यलङ्कारनिदर्शनत्वेनोदाहृतं "धूलीधूसरतनवो राज्यस्थितिरचनकल्पितैकनृपाः। कृतमुखवाद्यविकाराः क्रीडन्ति सुनिर्भरं डिम्भा" इति रुद्रटेन। दुर्नयं नवनीतादिचौर्यरूपचञ्चलचेष्टितं यथाऽग्रतो निर्दिष्टं (१६-२४ श्लोः)।

६। 'मृन्मृत्तिका प्रशस्ता तु मृत्सा मृत्स्ना च मृत्तिके'त्यमरः।

७। अखिलं वेत्यखिलमेव वा यथाश्रुतं बालकेभ्यः। 'स्युरेवन्तु पुनर्वै वेत्यवधारणवाचका' इत्यमरः।

८। मृदुरनुखो वादः स्वरः कथनभङ्गी वा यस्य। 'क्वाहं चखादे'त्यन्तापह्नवे उत्तमपुरुषादपि लिट् प्रयोगः।

९। गोकुणमुखहितान् (पा)। अन्तोऽवयवोंऽश इति यावत्। 'अन्तः स्वरूपे निकटे प्रान्ते निश्चयनाशयोः। अवयवेऽपी'ति हैमः।

१०। अद्भुततमानुभव उदात्तप्रभवः। अनुभाव इति वक्तव्येऽनुभव इति न सम्यक्। अतिलून-ममत्वां सर्वथा ममभाव-निर्मुक्ताम्। एवंविधाया एव भगवन्मायापरामर्शने योग्यता।

मन्दिरोदरमुपेत्य स सर्वि-र्घ्राणतर्पणमपाद्पसर्पि(११)।
शेषमेष विससर्ज धरायां मातृविस्मितविलासधरायाम्(१२) ॥१५॥
बाल्यमेवमनुपाल्य निकामं माधवः समनुसृत्य च रामम् ।
गोकुलेषु विचचार यथेष्टं ख्यापयन् स्वमतिचञ्चलचेष्टम् ॥१६॥
तर्णकानयमुञ्चद्-(20a) काले कस्यचिच्च विचकार स बाले ।
चोरितञ्च नवनीतमथादीद्वारितो व्रजवधूभिरनादीत् ॥१७॥
यत् पयोदधिघृतं व्रजवध्वा शिक्यकेषु निहितं बहु बद्ध्वा ।
आत्मनोद्घटितपीठकपङ्क्त्या(१३)ऽपीपतत्तदधिरुह्य स युक्त्या ॥१८॥
यत् पयोदधिघृतादि च गोपी ध्वान्तसन्ततगृहान्तर-(१४)गोपीत् ।
अङ्गसङ्गतविभूषणरत्नं तस्य सर्वमदिदीपत(१५)यत्नम् ॥१९॥
वस्तु वास्तुनिभमीप्सितवत्या(१६)मार्गितः सपदि गोपयुवत्या ।
गुत्नमण्डलमलं स्मयमानः सोऽभवत् सन्तमसि तेन समानः ॥२०॥
एवमादि बहुबालकलीला नन्दसूनुरचिताः शुभशीलाः ।
गोपिका गृहमुपेत्य यशोदामूचिरे रुचिरहासविनोदाः ॥२१॥

---

११। अपसर्पि प्रसृमरं घ्राणतर्पणं सर्पिर्घृतमपात् पीतवान् ।

१२। 'मातृविस्मिते'त्यत्र भावे क्तः। विश्वरूपदर्शने विस्मितताया मातुः सकाशे विलासधरा लीलामाहात्म्यानुभवसात्त्विकभाववती या धरा तस्याम्। अचेतने चेतनधर्माध्यासः।

१३। आत्मनोद्भावितपीचकपङ्क्त्या (पा)। स्वया बालमनीषयोद्भावितया धाराकारया पीठश्रेण्या। तद् पयःप्रभृतियुक्तया कौशलेनापीपतदपातयत्। व्रजवध्वा व्रजेश्वरपत्न्या यशोदया।

१४। ध्वान्तसन्ततगृहान्तः आलोकहीनस्य गहनस्य गर्भगृहस्य मध्ये अगोपीत् प्रच्छादितवती।

१५। अङ्गसङ्गतविभूषणरत्नमिव 'पयोदधी'ति सामानाधिकरण्येन निर्देशः। बहुमूल्यान्यङ्गस्थभूषणानि च गर्भगृह एव स्थाप्यन्ते। अदिदीपतेति दापयतेर्णिजन्तात्लुङ्। पयआदि तं तत्राभिनिविष्टं कारयामासेत्यर्थः।

१६। वास्तुनिभं छरङ्गप्रतिमं तत्र निधापनीयं वस्त्वित्यर्थे। सन्तमसि सन्तमसे गाढान्धकारे। समासान्तविधेरनित्यत्वान्नाजन्तत्वम्।

स्वेच्छया विहितबालविहारं कृष्णमागतमथो भवसारम्।
प्रेमपूर्णहृदया सदयाऽदः कोपितेव जननी निजगाद ॥२२॥
कृष्ण यच्चपलबालसहस्रङ्गोकुलेषु रमते तदज-(20b)स्रम्।
तत्र कोऽपि न तथाऽहह कृष्णस्त्वं(१७) यथाऽसि मम भाग्यविसृष्टः ॥२३॥
सोढ़ एव तव शैशवदोषः स्वालये किल ममात्र न रोषः।
यत् पुनः परगृहे चपलत्वं सन्तनोषि न ममेषित-(१८)तत्त्वम् ॥२४॥
शृङ्गि-(१९) शूकसलिलानिलसर्पारत्वं बिभेषि न मनागपि दर्पात्।
किं विधिः स विदधाति न जाने वेश्मकर्मसु ममानवधाने ॥२५॥
शक्यते न नियमस्तव साम्ना तत्स्यमे तदुदरे (२०) दृढ़दाम्ना।
इत्युदूखलवरे बत बन्धुं सूरियेष (२१) तमतिप्रियबन्धुम् ॥२६॥
मातुराशयमसाववगत्यापासरर्प पवनाधिकगत्या (VI)।
योगिनामपि तमाशु नगम्यं(२२) साऽनुधावदभिधावनरम्यम् ॥२७॥
क्वापि मण्डलिकयाऽजिरखण्डं मण्डयन्तमतिधावनचण्डम्।
धारया क्वचन तं व्यपयान्तं नाप सा श्रममवाप नितान्तम् ॥२८॥
आकुलश्रमजलामथ सम्यक् स्वातिनिश्चितमतिं (२३) स निशम्य।
प्रापयत् स्वमति-(21a)पङ्ककषायं योगिराजमिव सुव्यवसायम् ॥२९॥

---

१७। यत्तत् तव परिचितं बालसहस्रं रमते क्रीड़ति तत्र कोऽपि न त्वत्सदृशो दुर्ललितो दुर्नीतो वा। कृष्ट इति वङ्गीयलिपिकराभ्यासदुष्टः पाठः मा लिप्वाम्।

१८। सन्तनोनिदमम ईसितत्वं (पा)। ईषिततत्त्वं हृद्गतोऽभिप्रायः। मनीषादिपद-वदत्रेषधातोरर्थो विपरिणमनीयः।

१९। शृङ्गिकशूकसनानिल (पा)। शूको विषाक्तकीटविशेषः। ममानवधाने मयि कर्मव्यासङ्गात् कर्मान्तरे निरतायामिति यावत्।

२०। तत् तस्मात्।

२१। 'सूरियेषे'त्यत्र सूः प्रसूर्जननीत्यर्थः।

२२। 'नगम्य'मिति समस्तं पदम्। नगम्यमिति नञर्थेन 'न'पदेन समासः। समग्रपदे तु योगिनामिति सापेक्षत्वेऽपि गमकत्वात् समासः।

२३। स्वासिनिश्चितमतिमिति स्वासौ श्रीकृष्णग्रहणे बद्धसंकल्पाम् जननीं निशम्य ज्ञात्वेति यावत्। स्वमात्मानं प्रापयदित्यन्वयः। सुव्यवसायं व्यवसायात्मिकायां बुद्धावभिनिविष्टम्।

तं विधूत्य करयोरथ मालाऽदायि(२४) दाम कटिवेष्टनमात्रात्।
बन्धनाय निहितं त्वधिकुक्षि द्व्यङ्गुलोनमनया तदलक्षि ॥३०॥
तत्र साऽपरमयुक्त(२५) तदूनं पूर्ववत् स्वयमभूदविदूनम् (VII)।
नादधत्यपि पराऽपरदाम प्राप काममथ सा विरराम ॥३१॥
मातरं प्रति विदर्श्य स माया-मुद्गतां करुणया स्वयमायात्।
दर्शिते(२६) मृदुगतावनुबन्धे लीलया बत तया स बबन्धे ॥३२॥
इत्थमच्युतमुदूखलबद्धं सा बभार रभसादपराद्धम्।
चञ्चलाञ्च यदि सञ्चलनेऽलं(२७) शक्तिरस्ति तव नन्वतिवेलम् ॥३३॥
कृष्णमेवमभिधाय यशोदा वेश्मकर्मरचनाय मनोऽदात्।
बालकेलिषु हरिस्त्वतितर्षी निर्ययौ बहिरुदूखलकर्षी ॥३४॥
सागरेऽङ्घ्रिविवरैरति-(२८) गुर्वी लीलया वहति यो निखिलोर्वीम्।
तस्य केवलमुदूखलमात्रं कर्षतः (21b) किमिदमत्र विचित्रम् ॥३५॥
मातृतर्जनवशात् परवासान् वर्जयन् स बहुसञ्चितलासान् (२९)।
निर्जगाम यमलार्जुनमध्ये नोद्धुरः ३०) सततमूर्जितसाध्ये ॥३६॥
तिर्यगत्र तदुदूखलवर्यं वीर्यतः स विचकर्ष विलग्नम्।
स्वप्रभावबलवद्दृढदाम्ना तेन तत्तरुयुगं बत भग्नम् ॥३७॥
पेततुः क्षितितले गिरितुङ्गौ तौ द्रुमौ द्रुतसमस्तविहङ्गौ।
सौहृदादिव कृतव्यतिषङ्गौ सर्वदिग्जनितशब्दतरङ्गौ ॥३८॥

---

२४। अदायीति दो खण्डने कर्मणि लुङि। द्व्यङ्गुलोनं द्व्यङ्गुलेन परिमाणेन न्यूनम्।

२५। साऽपरं दाम पुनरयुक्त योजयामास। अविदूनमनाकुलं तद्दाम। अचेतने चेतनवदुपचारः। तन्मूलश्च "निःश्वासान्ध इवादर्श" इतिवदत्यन्ततिरस्कृतवाच्यो ध्वनिः। तस्मिन् नादधत्यपीति परा दृढनिश्चया साऽपरं दामायुक्त।

२६। दलितमृदुगतावनुबन्धे (पा)। अनुबन्धे उत्तरकाले तदनन्तरमिति यावत्।

२७। हे चञ्चल चपल कृष्ण अञ्च सर यदि तव सञ्चलने शक्तिरलमत्यर्थं मर्यादाभूतमस्तीति योजना। अतिवेलं वेलां दामातिक्रम्येत्यत्ययार्थेऽव्ययीभावः।

२८। सागरै भि (पा)। सागरे स्थितः क्षीरोदशायी अपि लीलया पदच्छिद्रैर्य उर्वीं पृथिवीं वहति।

२९। बहुवर्जितलवान् (पा)। बहु यथा स्यात्तथा सञ्चिता लासा भोगा येभ्यस्तान्।

३०। सततोद्योगी। नञर्थेन 'न'पदेन सुप्सुपेति समासः।

भूरुहप्रवरयरोथ मध्यात् पावकाविव विनिःसृतवन्तौ ।
पूरुषावपरुषौ प्रणिपत्य श्रीधरं गिर-(३१)मुदीरितवन्तौ ॥३९॥
कृष्ण पानजनिताम्निजपापान्नारदेन विहितादभिशापात् ।
वृत्ततामुपगतौ चिरमावां दुःखदामतिबलोज्झितभावाम्(३२) ॥४०॥
त्वत्प्रसादमिममेवमवाप्य प्राक्तनानि दुरितानि विलाप्य ।
लब्धतावकमुखेक्षणपुण्यौ स्वः(22a)प्रयाव दिविषद्गणगण्यौ ॥४१॥
कृष्णमित्थमभिधाय नुवन्तौ त्रिः प्रदक्षिणमिमं(३३)कृतवन्तौ ।
प्राञ्जली सफलिताभिमुखाशां जग्मतुर्द्रुतगती धनदाशाम् ॥४२॥
प्रागिमौ किल धनेश्वरपुत्रौ सीधुपानजमदेन विवस्त्रौ ।
तुल्यशीलवनिताभिरुदारौ कानने विजहतुः सहदारौ ॥४३॥
नारदं मुनिमवेक्ष्य निजानि स्त्रीगणैर्जगृहिरे वसनानि ।
गु[ह्य]कौ जगृहतुर्न तु मत्तौ तत्क्रुधा मुनिरसावशपत्तौ ॥४४॥
यद्युवां विवसनावतिमूढौ तच्चिराय तरुतामधिरूढौ ।
वीक्ष्य कृष्णमुखमेनसि शान्ते स्वः प्रयास्यथ इतोऽब्दशतान्ते ॥४५॥
इत्थमादिमुनिनाऽथ नु शप्तौ स्वापचारपरिचिन्तनतप्तौ ।
कृष्णदर्शनवशादुपशान्तौ भेजतुः सुखमयीं सुदशान्तौ (३४) ॥४६॥
प्रस्थितेऽथ नलकूबरसंज्ञे गुह्यके समणिग्रीव(कण्ठ)-(३५)समज्ञे ।

---

३१ । परमुदीरित (पा) । अपरुषौ त्यक्तकोपौ शान्ताचरणौ ।

३२ । बलजजतभावाम (पाः) । अतिबलात् प्रसभादुज्झितस्त्याजितो भावः स्वधर्मो यत्र तां वृक्षताम् ।

३३ । त्रिः प्रतीयमिमं (पाः) । सफलिता अभिमुखा अनुकूला आशा आशंसा यत्र ताम् ।

३४ । 'नु' पादपूरणे । सुखमयीं सुदशामिति पौनरुक्त्यमवद्यम् ।

३५ । एवमनुलिप्यां पाठः । पुनरत्र छन्दःपातो दूषणावहः । 'छन्दोभङ्गे त्यजेद्गिर'मिति प्रवचनात् । मणिग्रीवनलकूबरयोः शापो हरिवंशे विष्णुपुराणे च नोक्तः परमत्र श्रीभागवतपुराणे महाभारतीयसभापर्वणि च वर्णितमाख्यानमनुसृत्य निविष्टः । वङ्गीयेषु ग्रन्थेषु श्रीकृष्णकीर्त्तनानन्दवृन्दावनचम्पूगोपालचम्पूप्रभृतिषु च वर्णितोऽयं वृत्तान्तः । समज्ञा संज्ञा ।

वृक्षपातभरनादप्रतीते-(22b)स्तत्र(३६) गोपगण औणतिभीतेः ॥४७॥
तेन वृक्षविट[पे दद्दशा]ने चित्रधी[निरत-(३७)मन्ददृशा]ने ।
वेगतो निपतिते [बत भ]ग्ने कुत्रचित् क्षितितलार्धनिमग्ने ॥४८॥
मध्यतोऽत्र स ददर्श मुकुन्दं प्राकृतं(३८)सपदिनिन्दितकुन्दम् ।
स्मेरसु[न्दरसरो]रुहवक्त्रं दामसंमिलदुदूखलगात्रम्(VIII) ॥४९॥
तं निवर्तितनगेन्द्रनिपाते बाल इन्दुरिव दुग्धसमुद्रे ।
गोव्रजे पशुपतिः किल नन्दः संननन्द परिगृह्य समुद्रे(३९) ॥५०॥
निर्मुमोच तमुदूखलबन्धाद्वान्धवाखिलखलप्रतिबन्धात् ।
विघ्नसङ्घमथ तस्य निरस्यन्नङ्केषु स जजाप रहस्यम्(४०) ॥५१॥
नन्दपत्न्यपि तदात्मजवार्त्तामालितः श्रुतवती सुजवार्ता ।
प्रस्नुतस्तनयुगोपजगाम प्रेक्ष्य कृष्णमुपगुह्य शशाम ॥५२॥
ऊचिरे व्रजजना मिथ इत्थं(४१) वर्षविद्युदनिलादिसदुत्थम् ।
भूषणं बत विना(४२) दिवि लग्नौ केन भूरुह-(23a)वराविह भग्नौ ॥५३॥
बालकैरिदमवादि तदाऽसौ कृष्ण एव पथिकव्रजवासौ(४३) ।
शाखिनौ वलदुदूखलकर्षाद्द्राग् बभञ्ज शिशुखेलनहर्षात् ॥५४॥

---

३६। नादप्रतीतेरेत्यत्र दकारस्वरो लघुः 'प्र ह्वेवा' इति छन्दोविदां समयात्। औणमिभातेः (पा)। औणत्मपानयदात्मानमिति यावत्। ओणृ अपनयने इति धातुपाठः। अतिभीतेरिति कारणोपन्यासः।

३७। चित्रधीनिरतमन्ददृश्य चित्रधियाऽऽश्चर्यबोधेन निरतावुपशान्तौ मन्दौ विकलौ दृशौ येन—गोपगणेनेत्यस्त्रिमेण परामर्शः।

३८। प्राकृतं स्वीयया प्रकृत्या निर्वृत्तं नाल्पमप्यभिभूतम्। प्राकृत···(पा)।

३९। समुद्रे मुद्राभिर्भगवतो विक्रमसूचकैरङ्कैर्युते व्रजे।

४०। अङ्केषु बालकोचितेषु क्षुद्रेष्ववयवेषु रहस्यं कवचमेव स जजाप। सुजवार्ता प्रकृष्टेन वेगेन त्वराकृतेन खिन्ना।

४१। वर्षविद्युदादिजनितं दुर्योगजातम्। विशेष्यप्रतिपत्तौ विशेषणनिवेशः।

४२। भूषणमाभरणभूतं दैवतवरवदभ्यर्थितम्। एतद्विना यमलार्जुनभङ्गादिविपत्-प्रतीकारः कथमभविष्यदित्याकूतम्।

४३। पथिकव्रजानामध्वगवृन्दानां वासौ विश्रामभूतौ तत्तल एव तेषां विश्रान्तेः, वसतेरधिकरणे घञ्।

निःसृताविव उभावतिकम्रौ पूरुषौ च हरिभक्तिविनम्रौ ।
उत्तरां दिशमितोऽवतरन्तौ दद्दृशन्त इह(४४) चारु नुवन्तौ[IX] ॥५५॥

तथ्यमप्यथ वचः कथकानां गोदुहो न जगृहुः पृथुकानाम् ।
क्वाचलाभयमलार्जुनभङ्गः क्वेह कृष्णशिशुचापलरङ्गः ॥५६॥

केचिदत्र समशेरत सन्तः पूतनाऽऽदिपतनस्मृतिमन्तः ।
तेजसा भगवतो निरचैषुश्चेतसाऽथ बहुमानमकार्षुः ॥५७॥

अव्रजन् व्रजजनाः सह सर्वे नन्दमन्दिरममन्दमहन्ते (४५) ।
कृष्णवीक्षणपराः क्षणमात्रं ते स्म तस्य विरहं न सहन्ते ॥५८॥

उत्सवन्तमनुभूय च हृष्टास्तेऽथ गोपपतिनन्दविसृष्टाः ।
रेमिरे हरिकथां कथयन्तः स्वालयेषु च वनेषु वसन्तः ॥५९॥

मात्राऽयमेवमुदरे यदबन्धि दाम्ना
दामोदरेति भुवने तदगायि(४६)नाम्ना ।
कृष्णः समस्तकलिकिल्बिषनाशहेतु-
रद्यापि गीयत उदारभवाब्धिसेतुः ॥६०॥

इति **हरिचरिता**ख्ये नव्यसत्काव्यमुख्ये
प्रसरदमृतधारे वर्णितेशावतारे ।
कृतकलुषनिरासे तुष्टबालाविलासे
व्यरमदतिसदर्थः **सर्ग** इत्थं **चतुर्थः*** ॥

---

४४ । ददृशन्त ददृशिरे (पा) । चारु सुन्दरं युक्ताञ्जलिभावेन नुवन्तौ स्तुवन्तावित्यर्थः ।

४५ । अमन्दमहं कृष्णकृतकीर्तिमदवदानेनोचितगौरवसूचकोत्सवेन सज्जितम् ।

४६ । तद् तस्मादगायि कीर्त्यते स्म । दामोदरेति–दामोदर इति सम्बुद्धिः कथञ्चित समर्थनीया ।

# हरिचरितम्

## पञ्चमः सर्गः

यमलार्जुनभूरुहारिणा हरिणा हीरहिरण्यहारिणा(१)।
सकलव्रजभूविहारिणा रुरुचेऽथाखिलचित्तहारिणा ॥१॥
कुशलाय मिथो विमत्सरौ रममाणौ भुवि सप्तवत्सरौ।
बलदेवहरी बभूवतुः परमप्रेममतौ सदैव तु(I) ॥२॥
शरदिन्दुघनाघनाभयोरिह संकर्षणपद्मनाभयोः।
अति रेजतुरंशुके उभे शशभृद्रश्मितडित्समप्रभे(२) ॥३॥
त्रिजगद्गतशिष्टपालकौ नलिनास्यावतिचञ्चलालकौ।
— — (३)बभूवताते बत वत्सपालकौ ॥४॥
भवने भवने वनेऽवने विजह्राते सखिवृन्द-(24a)संयुतौ ॥
धृतपीतसिताङ्गलेपनौ वनमालावलितौ बिलासिनौ ॥५॥
कृतवल्लववेणुवादनौ प्रमदानां हृदयावसादनौ।
बलिनामलिनां प्रगायतां ध्वनितो रम्यमिमाव(४)गायताम(II) ॥६॥
कलनेऽस्य हरेः कलापिभिर्जलदभ्रान्तिवलाभिलापिभिः(५)।

---

१। सर्गेऽस्मिन् वियोगिनी मुख्यं छन्दः। हीरहिरणयोर्हीरककाञ्चनयोर्हारो विद्यते यस्य नात्र यमके 'न कर्मधारयान्मत्वर्थीय' इत्यादि प्रतिषेधानुशासनं निर्बन्धतोऽनुसरणीयम्। अत्रानुलिप्यां द्वितीयश्लोकादारभ्य श्लोकसंख्यैकाधिका दर्शिता।

२। शशभृद्रश्मिर्धवलप्रभा। तड़ित् पीताभा। यद्यपि हलिनो नीलाम्बरत्वमेव प्रसिद्धं तथापि पञ्चमश्लोकेऽनुलेपवर्णनवदम्बरवर्णनं तस्य तथैव विहितम्। यद्वा चन्द्रकिरणानां पीतत्वमवसेयमिति सङ्गतिः।

३। अयंमनुलिप्यां लिपिकरप्रमादाद्गलितः। 'व्रजसद्मनि गोपबालका'विति पुराणाख्यानसंवादी पाठः।

४। बलिनां मधुपानपुष्टानामिति यावदलीनां मधुपानां गुञ्जनादपि ध्वनितो रम्यं रम्यतरमिमौ श्रीकृष्णसङ्कर्षणावगायतामिति सम्बन्धः। एवं नवमश्लोके बलिवत्सेति समाधेयम्। वल्लववेणव इति गोपानां प्रिया वंशवेणवो ये हरिवंशे (२।११।१२) गोपवेणुत्वेन संज्ञिताः।

अति नृत्यमभि प्रवर्त्यते तदिहाभ्यामनुकृत्य नृत्यते ॥७॥
दलवाद्यमवादि(६)यत् समं हरिणाऽथो हलिना मनोरमम् ।
तदुपश्रुतितोऽतिहर्षिणस्तरवोऽप्यासत पुष्पवर्षिणः ॥८॥
बलिवत्सकुलञ्च चञ्चलं परितो वारयितुं कृतश्रमौ ।
अधिशय्य दलावलीमयं शयनीयं नु निदद्रतुस्त्विमौ ॥९॥
श्रमतोऽपि न शिश्यिरे परे पदसंवाहनमेव चक्रिरे ।
हलिनो वनमालिनोऽप्यलं जनुषस्तैस्तदलम्भि सत्फलम्(१०) ।
अपरे पुनरत्र वल्लवाः करसञ्चारितचारुपल्लवाः ।
दयितौ शयितौ व्युदैजयंस्तदिमं लोकम-(24b)मुञ्च तेऽजयन् ॥११॥
प्रजजागरतु[स्ततत]स्तु तौ बलकृष्णौ सुरसन्ततस्तुतौ ।
भगवाननुगान् स तत्क्षणे निदिदेशाखिलवत्सरक्षणे ॥१२॥
अथ तेष्वपयातवत्स्वयं परिचिन्त्याथ विधित्सितं स्वयम् ।
सततं हितकृद्व्रजौकसां हलिनं प्राह गुरुं गरीयसाम् ॥१३॥
इदमार्य ममावधार्यतां रुचितं तद्भवता विचार्यताम् ।
अधुनैतदलं न रोचते वनमस्मभ्यमतो न रोचते(७) ॥१४॥
नवशस्यचयः पदे पदे य इहासीद्वहु गोकुलास्पदे ।
न किलावयवोऽस्य लक्ष्यते निपुणीभूय यदा निरीक्ष्यते ॥१५॥
चिरमत्र च गोकुलस्थितेष्वपि(८) बंह्वम्पि सरांसि सर्वतः ।
परिशुष्कपयांसि कानिचिद्वु विकलाम्भांसि न भान्त्यहो बत ॥१६॥

---

५। हरे। कलने घनश्यामं हरिं दृष्ट्वा कलापिनो मयूराः प्रावृडागतेति भ्रान्तिबलादभिलापिनोऽभितो रुवन्त आसन्। एवं हरिवंशे (२।८।३ ; २।२१।११)।

६। दलवाद्यं श्रुतिसुखं पत्रवाद्यमित्यपरैरभिहितं ग्राम्योत्सवेष्वधुनाऽपि शिशुक्रीड़नकं विक्रीयते, रुद्रवीणाऽऽदिकमिति हरिवंशे नीलकण्ठव्याख्यानम्।

७। वनमलं यथायथं न रोचते न शोभते अतोऽस्मभ्यं न रोचते न मनःप्रीतिकरं भवति। रुच दीप्तावभिप्रीतौ चेति धातुपाठादत्र भिन्नार्थता। तेन यमकनिर्वाह आलङ्कारिकसम्प्रदायगता न काऽपि बाधा।

८। गोकुलस्थितेषु सरःस्विति विशेष्यप्रतिपत्तिरव्याहता। एवमपि ४७-तमे 'नवशष्पवतीष्वि'त्यत्र भूमिष्विति विशेष्यप्रतिपत्तिः। अत्र श्लोके तु निर्धारणे सप्तमी।

न तृणानि नृणामृणादिना सुलभानि क्रयणाद्विनाऽधुना ।
तदयमजगरायते व्रजः प्रकटन्दूरतरं(९)वहन् रजः(III) ॥१७॥
गमनं विपिनान्तरं प्रति प्रतिभात्यौ(25a)पयिकं हि संप्रति ।
तदहं निगदामि ते वनं यदलं गोपकुलावलम्बनम् ॥१८॥
भुवनत्रयलभ्यमाननं बहु वृन्दावननामकाननम् ।
यमुनामनु नेत्रनन्दनं नरिनर्तीव विनिन्द्य नन्दनम्(IV) ॥१९॥
सकदम्बकदम्बकं वलक्षकुलाडम्बरसंवृताम्बरम् ।
सुकुमारतरस्फुटस्फुरत्कुसुमामोदितदिङ्मयं वरम् ॥२०॥
प्रसरन्मधुगन्धविभ्रमदभ्रमरागुञ्जितकुञ्जमञ्जुलम् ।
मदचञ्चलकोकिलावलीक[ल]नादालयमञ्जुवञ्जुलम् ॥२१॥
अमृताम्बुधिबन्धुवस्फुरत्सरसं फुल्लसरोज-(११)मञ्जुलम् ।
प्रदिमास्पदशस्यभक्षणक्षणनिद्राणकुरङ्गसङ्कुलम् ॥२२॥
दलमण्डलखण्डितातपक्रमभाण्डीरमहीजमण्डितम् ।
द्रुमषण्डगतातिताण्डवप्रवणाकुण्ठशिखण्डि-(१२)पण्डितम् ॥२३॥

[ पञ्चभिरादिकुलकम् ]

अचलो बहुयोजनोच्छ्रितः स च गोवर्धन इत्यभिश्रुतः ।
सविधेऽस्य मरुद्भिरञ्चितः स्फुरति स्माखिलधातुसञ्चितः(25b) ॥२४॥
सह बन्धुभिराशु गम्यतां चिररात्राय च तत्र रम्यताम् ।
इह घोषनिवासपोषिकां पिदधेऽहं महतीं विभीषिकाम् ॥२५॥

---

९। प्रकटद्दते भवं (पा)। रथाश्वादिसञ्चारैरतिधूलिमयं पुरवर्त्मेति स्थितिः। उत्सवादिष्वेतदार्द्रीक्रियते। 'उक्षाम्प्रचक्रुर्नगरस्य मार्गा'निति भट्टिवर्णनादवगम्यत इदम्।

१०। 'वरं रम्यं शुभं वे'ति हरिवंशवर्णनात् (२।८।२२, २४)—तत एव श्रेष्ठम्।

११। फुल्लैः सरोजैर्मञ्जुलमिति योजना। कविसमयबलात् 'सरिदुदधिगतं पङ्कजेन्दीवरादी'ति कथञ्चित् समर्थनम्। अथवा सरोजेति पदं यौगिकेऽर्थे सरोजाते कुमुदकह्लारादौ वर्तते। केचित्तु सरोजोत्पलादिपदै रात्रिविकाशिकुसुमान्येव बोध्यन्त इत्याहुः। यथा वल्लभाचार्यो भागवतटीकायाम् (१०।३३।११) उत्पलं हि रात्रिविकाशीति निर्देशात्।

१२। ताण्डवप्रवणा अकुण्ठमप्रतिहतप्रसरं पण्डिताः शिखण्डिनो मयूरा यत्रेत्यर्थेप्रौढ़िकल्पितं पदसन्दर्भनम्। 'प्रोढ़िर्व्यासमासौ चे'त्यभिलषितमोजश्चार्थगुणः।

इति जल्पत एव निःसृतैर्वपुषो व्यानशिरे वृकैर्दशः ।
दशशः शतशः सहस्रशोऽ[युतशो] लक्षश आशु कोटिशः ॥२६॥
हृदुदश्चितरोमराजयो विनदन्तो भृशभैरवं(१३)रवम् ।
त इमे परिकम्प्य गोदुहां बत चक्रुः परमाकुलं कुलम् ॥२७॥
निशि कस्यचिदात्मजानिमे जहुरह्नाय गृहाद्विनिर्गमे ।
अपि कस्यच न प्रियाः स्त्रियस्तदभूद्रास इहातिविप्रियः(१५) ॥२८॥
जहिरेऽथ दिवाऽपि धेनवस्तृषितैः क्वापि च गोपसूनवः ।
न जलाहरणेऽपि केचन प्रबभूवुः कुशलादिके च न ॥२९ ॥
इति गोव्रजमेकतः स्थितं(१४) वृकभीतेरुपलभ्य दुःस्थितम् ।
अभिभाव्य सनन्दवल्लवानुपनन्दाभिध(१६)एवमुक्तवान् ॥३०॥
शृणुत स्थविराः स्थिरां गिरं मम सम्भूय विव-(26a)क्षिताश्चिरम् ।
इह गोपकुलव्यवस्थितिर्न हिता नः प्रतिभाति संप्रति ॥३१॥
शकटस्य पुरा विपर्ययात्तदकस्मादुबत पूतनाक्षयात् ।
यमलार्जुनयोश्च भञ्जनाद्विभिमोऽत्रातिवृकाभितर्जनात् ॥३२॥
तदिहाहह यावदाव्रजेन्न महोत्पातसमुच्चयो व्रजे ।
द्रुतमन्यवनोपसर्पणं क्रियतान्तत् किल नो हितार्पणम् ॥३३॥
इति ते हितकारिणीं गिरं समुपादाय बुधाः(१७)सुधामिव ।
सुविमृश्य ततः प्रतस्थिरे बत वृन्दावनमुत्तमं दिवः ॥३४॥

---

१३। भृशमत्यर्थं भैरवं रवं शब्दम् । कुलं समूहम् ।

१४। विप्रियः प्रियविपरीतोऽप्रियः, विगतं प्रियं यस्मादिति वा वाक्यम् । 'कृतवानसि विप्रियं न मे' 'इति विप्रियमाकर्ण्य गोप्यो गोविन्दभाषित'मित्यादि प्रयोगबाहुल्यात् । जहुरिति "प्रह्वे वेति" छन्दःशास्त्रे विकल्पकल्पनाल्लघुत्वम् ।

१५। 'एवं वृकैरुदीर्णैस्तु व्याघ्रतुल्यपराक्रमैः । व्रजो निष्पन्दचेष्टः स एकस्थानचरः कृत' इति हरिवंशे वर्णनमनुध्येयम् ।

१६। एवं भागवतपुराणे (१०।११।२२) तत्रोपानन्दस्य ज्ञानवयोऽधिकः "देशकालार्थतत्त्वज्ञ" इति च विशेषणे । यथा सेतुबन्धप्रसङ्गे जाम्बवतः प्रज्ञावत इति विशेषणेन निर्देशः । हरिवंशे तु वृन्दावननिरासाय गोपान् कृतनिश्चयान् ज्ञातवतो नन्दस्येयं युक्तिसूक्तिः । अभिभाव्य सर्वातिशायितया स्थित्वा ।

१७। बुधा विवेचका हिताहितज्ञानशालिन इति यावत् ।

शकटेष्वधिरोप्य बालकान् बलवर्धककुम्भकीलकान्(१८)।
पुरतः परिकाल्य गोकुलं प्रययुः शृङ्गरवैरनाकुलम् ॥३५॥
वरमेकमनो यशोदया सह रोहिण्यधिरुह्य सोदया।
प्रययौ हरिकेलिगीतकैरति सङ्कर्षणकृष्णहर्षकैः(१९) ॥३६॥
व्रजवासविहारभूरभूदतिभूयः परभृत्कुलाकुला(२०)।
पयसा(26a)कृतलक्षणा क्षणाद्दधिपात्रावयवायुतायुता(२१) ॥३७॥
स कलिन्दसुतातटेष्वथो शकटौघो विबभावतिस्फुटम्।
हलिकृष्णयुतः स पुष्यवान् घनसंघातमिवोपसेदिवान्(२२) ॥३८॥
अवतारितकृष्णसंकथाऽमृतवल्लीमितदूरतत्पथाः (२३)।
अविशन्व्रजवासिनो रयादथ वृन्दावनमुच्छ्रितं श्रिया ॥३९॥

---

१८। नवनीतघृतादिबलवर्धकसम्भारैः पूर्णान् मन्थनभाण्डादीन् मन्थनदण्डसंयोजक-पाशस्थूणादींश्च शकटेष्वारोप्येत्यर्थः। एवमपि हरिवंशे (२।९।२३–२९)।

१९। अति अतीव हर्षकैरित्यन्तःस्थक्रियाया विशेषणम्। सोदया उदयेनानन्दोद्रेकेण सहिता प्रफुल्लेति यावत्।

२०। परभृतो वायसाः 'काकेभ्यो दधि रक्ष्यता'मितिवत् लक्षणा। परभृत्पदेन विहङ्गमा एव लक्ष्यन्ते।

२१। 'वस्तुतस्तु (प्राचीनं) व्रजस्थानमीरणं समपद्यत। द्रव्यावयवनिर्धूतं कीर्णं वायस-मण्डलै'रिति हरिवंशे। नूतनन्तु काननावृतं विहङ्गमकुलैः सङ्कुलञ्चासीदित्याशयः। गावश्चात्र कामदुघा आसन्। अतो व्रजभूमिर्दधिघृतादिभिः प्लाविता जाता। दधिपात्रावयवानां दध्यादिभाण्डानामयुतैरायुता सम्यगुपलक्षिता।

२२। एवमनुलिप्यां पाठः। शकटौघो मेघसंघेन हलिकृष्णौ तिष्यपुनर्वस्वाख्यनक्षत्राभ्यां यमुनातटदेशाश्च विस्तृतगगनतलेनोपमीयन्ते। आदिमचरणे 'स' इति शकटौघ इत्यस्य विशेषणम्। तृतीयचरणे 'स' व्रजः। पुष्यवान् तिष्यपुनर्वसुद्विकयुक्तश्चन्द्रो मेघमधिरूढ इव बलकृष्णसहितो व्रजो व्रजवासिजनः शकटस्थः।

२३। कृष्णलीलाश्रिता परम्परालापेनामृतलताकल्पेन मिता परिमिता दूरवर्तिनस्तन्मार्गा यैस्तादृशा व्रज जनारयात् वेगेन त्वरयेति यावत् वृन्दावनमविशन्नित्यन्वयः। (अथच यथा चन्द्रः पुष्यरथमधिरोहन् पुष्यापुनर्वसुनक्षत्रयुक्तो भवन् भाति शोभते तत्र कालेऽनुष्ठितानां क्रियाणां फलदातृत्वेन तथा व्रजो विबभौ। "अत्र वराज सम्पादकमिष्टसिद्धेः [सर्वासु दिक्ष्वप्रतिषिद्धमार्गम्। महारथः पुष्यरथं रथाङ्गी क्षिप्रं क्षपानाथ इवाधिरूढ" इति माघपद्यस्य छाया स्फुटैव।

नवपल्लवपालिविस्फुरत्फलपुष्पोच्चयनम्रमूर्तयः ।
विटपिप्रवरास्तदातिथीनलमानर्चु रिमान् सुकीर्तयः(२४) ॥४०॥
मकरन्दमयोदबिन्दुभिः प्रचितैः पाद्यमिमे तदा ददुः ।
पदयोर्निहितैः शिरोऽर्पितैः सह पुष्पैर्वरमर्घ्यमप्यदुः ॥४१॥
फलपुष्पदलानि पश्यतां वदने पुष्परसैर्निवेशितैः ।
मधुपर्कमकार्षु रार्षतो विधितो गन्धवहेन देशितैः(२५) ॥४२॥
अमृत प्रतिमं फलोत्करं परमेतानतिथीनभोजयन् ।
कुसुमै(27a)रचितेऽथ पल्लवैः शयनीये शयितान्नुदैजयन् ॥४३॥
सुनिदद्रुरिमे पथश्रमाद्द्रुम मूलेषु ततोगत क्रमाः ।
तृणमभ्यवहार्य गोकुलं यमुनायां सदपाययन् जलम् ॥४४॥
न्यविशन्त ततो यथारति श्रितचन्द्रार्धसमानसंस्थिति(२६) ।
विदधुर्विविधं निकेतनं रुचिरं तद् भृशमुच्चकेतनम् ॥४५॥
तरुभिस्तरुभिः समाहृतैरिह तैरावरणानि चक्रिरे ।
दिशि दिश्यतिविस्तृतेऽजिरे बलिदामावलयो वितेनिरे ॥४६॥
इति गोपकुले निराकुले वनमालिप्रबलावलम्बनेः(२७) ।
नवशष्परसेषु धेनवः प्रचरन्ति स्म शुचावलं वने ॥४७॥
भगवानभिवृद्धये गवां शुभचित्तेन तथाऽन्वचिन्तयत् ।
विपिनं तदलं नभस्यवद् बत घर्मेऽपि ऋतौ(२८)बभूव यत् ॥४८॥

---

२४। पालिः श्रेणी 'नंनम्यमाना फलदित्सयेवे'त्यादि भट्टिवर्णनं तुलनीयम् ।

२५। विधितो दैवेन विधानेनानुष्ठानिकेन यज्ञीयविधिना चेति देशितैः शास्त्रज्ञव्यवस्थितैः सम्भृतैः प्रेरितैर्वा ।

२६। नूतननिवेशश्चन्द्रार्धाकारसंस्थितैः वास्तुशिल्पविद्भिः समञ्जसं कल्पितैरावासर्व्यवस्थितसीमाऽऽसीत् । एवमपि हरिवंशादिवर्णने ।

२७। वनमाली यौगिकेनार्थेन वनमालाभूषणोऽथ च रूढ्या श्रीकृष्ण एव प्रबलं श्रेष्ठमालम्बनं सहायो यस्य तादृशे गोकुले । शुचौ ग्रीष्मे अलमत्यर्थं प्रचरन्तिस्मेत्युत्तरार्धविवरणम् ।

२८। घर्मेऽपि ऋतौ इति 'ऋत्यक' इति 'इकोऽसवर्णे शाकल्यस्ये'ति वा प्रकृतिभावः । घर्मेऽपि ग्रीष्मेऽपि नभस्यवत् श्रावण इव ।

रसवद्यवसप्रसन्नवाः कलसोध्न्योऽविरतं पयःस्रवाः ।
सुरभीमनुचक्रुदत्प्रभा बत नैचिक्य इहेन्दुसन्निभाः(२९) ॥४९॥
कमलाऽध्युषितो धुता-(27a)वधिर्विधुपादोल्लसितः पयोनिधिः ।
सितगोगणनिर्मलोर्मिमान्विबभौ(३०)तत्र तदा व्रजो महान् ॥५०॥
विधृतोज्ज्वलरत्नभोगिभिः सततं तत्र वृते ससार सः ।
नवबल्लवसुभ्रुसुभ्रुवां समरूपाप्सरसां(३१)सदा रसः ॥५१॥
हरिरत्र समे गवांगने प्रसृतः पैतृकवत्सरक्षणे ।
विचचार वने विदुःसहः सद्वशैर्गोपकुमारकैः सह(३१क) ॥५२॥
तमिहाथ निहन्तुमेकदा बत[व]त्सासुर आययौ मुदा ।
तमवेत्य बलं समालपद् स तु पश्चात्पदमीश्वरोऽक्षिपत् ॥५३॥
हरिणा तृणवत् कपित्थके प्रहितं(३२)खे परिहीणजीवनम् ।
असुरं पतितं विलोक्य तत् तदगाहन्त मुदाऽनुगा वनम्(XI) ॥५४॥
वरकेलिमिमे स्थले जलेऽनुबभूवुर्भगवत्प्रभावतः ।
गिरिकूटमिव व्यवस्थितं यमुनायां ददृशुर्बकं ततः ॥५५॥
स सतामभिभावको बको द्रुतमागत्य विकस्वरस्वरः(३३) ।
हरिमग्रसतायतो यतो(28a)बत बिभ्यत्यतिभासुराः सुराः ॥५६॥

---

२९ । यसवमुवस प्रसन्नवाकलसगा विरत (पा) ।'''स्रसन्नवा कृतयुगाविरतं पयःस्रवाः (ने. मा. पा) । नैचिक्य उत्तमा गावः 'स्यादुत्तमा गोषु नैचिकी'त्यमरानुशासनात् । सुरभीमिति 'कृदिकारादक्तिन' इति वैकल्पिकं दीर्घत्वम् । यवसं प्रसन्तो ग्रासरूपेण गृह्णन्तो नवाश्चेति समासः । उत्प्रभाः प्रभामुपरि विच्छुरन्त्यः ।
३० । पयोनिधिर्लक्ष्म्या चन्द्रेणोर्मिमालया च भाति । व्रजोऽपि कमलैः पद्मैर्विधुना भगवता श्रीकृष्णेन सितैस्तरङ्गनिभैर्गोभिश्च बभौ । निर्मलोर्मिरित्यनेनैव वाच्यसिद्धौ मत्वर्थीययोगः कथञ्चित् समाधेयः । धुतस्तिरस्कृतोऽवधिर्यत्रेत्यभुयत्र विशेषणम् ।
३१ । नवानां तरुणीनां वल्लवसुभ्रुसुभ्रुवां शोभनचञ्चलभ्रुयुतानां गोपनारीणां समरूपा अप्सरसः ।
३१क । समतलप्रदेशस्थे गवाङ्गने गोष्ठे 'अवङ् स्फोटायनस्ये'ति सन्धिः ।
३२ । 'भ्रामयित्वा कपित्थाग्रे प्राहिणोद्गतजीवित'मिति भागवतपुराणे ।
३३ । तारस्वरेण चीत्कृतिमान् । आयतो दीर्घाकृतिः । यतो बकात् सुरा अपि बिभ्यति ।

त्रिवि देववरा दरादरादथ वैकुण्ठसमुच्छ्रयाश्रयात्(३४)।
अरये हरये सते सते परमं स्वस्त्यजपन् पुरा पुरात्(XII) ॥५७॥
भगवानलमुज्ज्वलत्कुलेऽनलवत्तस्य रिपोरनाकुले।
असहिष्णुररीन्द्रमर्दनं लघु चच्छर्द रिपुर्जनार्दनम्(३५) ॥५८॥
सुरसिद्धगणैर्जयेत्ययं गदितः सोऽपि विधित्सुरत्ययम्।
धृतचञ्चुपुटो व्यपाटयद्बुपुरापुच्छमथ व्यसर्जयत् ॥५९॥
स बकं विनिपात्य लीलया सवयोवत्सयुतो गृहानयात्।
सुमनोनिवहैरितस्ततः सुमनोवृष्टिपरैरतिस्तुतः ॥६०॥
इति वत्सबकासुरौ हरिर्विनिहत्याथ भवार्णवे तरिः।
मुमुदे स जनाभिनन्दितः पुरुवृन्दारकवृन्दवन्दितः ॥६१॥
सुरवैरिवीरवरसंहरणे सकुटुम्बगोपकुलसम्भरणे(३६)।
हृदयं निधाय विजहारतरां हरिरेवमेवमनुगृह्य धराम् ॥६२॥

इति **हरिचरिता**ख्ये नव्यसत्काव्य-(28b)मुख्ये
प्रसरदमृतधारे वर्णितेशावतारे।
कृतकलुषनिरासे तुष्टबालाविलासे
गलितसकलदोषः **पञ्चमः सर्ग** एषः ॥*॥

---

३४। दरो भयमादरो विस्मयसहकृतबहुमानश्चेति द्वन्द्वः। 'सर्वो द्वन्द्वो विभाषयैकवद्भवती'ति वैकल्पिकमेकवचनम्। 'दरादराभ्यां दरकम्पिनी पपे' इति नैषधपद्यपङ्क्तिरत्रानुप्रासप्रसङ्गे स्मरणीया। परिगृहीतात् वैकुण्ठसमुच्छ्रयादुन्नतवैकुण्ठस्थादाश्रयात्। 'कृदभिहितो भावो द्रव्यवत् प्रकाशते' इति न्यायात्। अरये सते अरिभावेन वर्तमानाय सते शोभनाय सते नित्यायेति च हरये देवाः परमं स्वस्त्यजपन्।

३५। असहिष्णुरवीन्द्रमङ्गलं लघु चट्टुरियुर्जनार्दनम्(पा:)। अनाकुले एतावत्कालं दुर्धर्षं।

३६। संवरणे (पा)। संभरणं सम्यग्रक्षा। संवरणमिति पाठो वा। संवारः सम्यक् प्रच्छादनेनाश्रयदानमिति सदा व्याख्या। संहरणे इति पाठे गोपगोपीनां स्वलीलाऽर्थमेकीभवननिमित्ते। प्रमिताक्षराच्छन्दः।

# हरिचरितम्

## षष्ठः सर्गः

हरिररिप्रकरप्रकटाविलां प्रशमयन् पुनरेवमसाविलाम्(१)।
उषसि शृङ्गरवैः कृतबोधनै-र्वनमगात्(२)सखिभिः सहगोधनैः(I) ॥१॥
अटविपर्यटनानुपमं श्रमं शमयितुं सहसा परमं त्तमम्।
दधिसुधाह्रदपङ्कसमं घृतं बलमनायि शृतञ्च पयोऽमृतम् ॥२॥
सनवनीतमनीयत सादरं मथितमप्यमृतद्रवसोदरम्।
घृतमधुप्लुतपायसमोदका अलमनायिषत श्रमनोदकाः(३) ॥३॥
चपल[व]त्सकुलानुगतीच्छया गृहगतस्वजनागमवाञ्छया।
द्रुतविलम्बितमेव वनं यया-वभिगतः शिशुतां निजमायया ॥४॥
भगवतः पुरतः परिचारकाः सुननृतुर्वरगोपकुमारकाः।
कतिचिदस्य जगुर्ललितं यशः(29a)क्वचन वाद्यमपूरि दिशो दश ॥५॥
मधुरिपुश्चलितो वनमालया-दतिबभौ वलितो वनमालया।
जगत एव मनांसि समाददत् प्रमुदितो मृदु वेणुमवीवदत् ॥६॥
तदतिमोहनवेणुरवध्वनिश्रवणतोऽभि समाययुरध्वनि।
मृगकुलानि मुदा ननृतुर्बहु प्रथमतोऽथ रसान्मुमुहु-(४)र्मुहुः ॥७॥

---

१। अरिप्रकरैः दैत्यस्वभावैः शत्रुनिचयैः प्रकटमाविलमाविलत्वं कलङ्कित्वं यस्यास्ता-मिलां पृथिवीम्।

२। गोष्ठप्रचारवर्णनं (१-११ श्लोः) वैष्णवपदावलीसाहित्येऽप्येतत्संवादि बहुत्रोप-लभ्यते। पुराणवर्णनेषु नैतावान् विस्तरो वरीवर्ति।

३। द्वितीयतृतीयश्लोकयोरर्थपौनरुक्त्यं स्फुटम्। अनयोरेकतरस्य वर्जने न काऽपि हानिर्भवति। माः-लिपौ द्वावेव पठिताविति मूले द्वावेव धृतौ। प्रथमपद्ये 'घृतं बल'मिति बलकारकं घृतमित्यर्थे 'आयुर्घृत'मितिवत् लक्षणा।

४। बहु···एवमनुलिपौ पाठः। बह्विति क्रियाविशेषणम्। अथ मुहुः पुनः पुनः रसादभिनिवेशान्मुमुहुर्मूर्च्छिता अभवन्।

कवलमप्यवलम्ब्य विलम्बनं तदशने पटचित्रविलम्बनम्(५)।
विदधतो वशिता हरिणा गुणैरिह सहेव सिता हरिणा गुणैः ॥८॥
कलकलेन नृणां नभसङ्गमाः खमुपगम्य मिथः कृतसङ्गमाः।
न विगताः सशिवैणवनादतः(६) प्रगुणवैष्णववैणवनादतः ॥९॥
परमया रमया भगवान् गवा-मनुगतोऽनुगतोवणतो गवाम्।
सुगहने गहने(७)सखिभिः समं सुरमते रमते स्म मनोरमम् ॥१०॥
सखिभिरेवमरण्यविहारिणि त्रिजगदेकगुरौ मुरवैरिणि।
अलमकारितरां वरकाननं तदृतुभिः(29b) सकलैः कृतमाननम् ॥११॥
ललितकोकिलकाकलिकाकलि-स्वरसंवलिका कलिकाऽकलि।
मधुजिताऽऽम्रगता वलितावलि-भ्रमरसंमिलिता बलिनाऽवलि(८) ॥१२॥

---

५। तदशने कवलग्रसने विलम्बनं विलम्बं तथा पटचित्रे चित्रपटे इव विलम्बनं शिरोऽवलम्बनसूचितं विदधतः हरिणा श्रीकृष्णेन गुणैर्वशिता वशीकृताः सिताः श्वेता मृगा गुणैं रज्जुभिः सहे व वृन्दावनकानने हरिणा सिता बद्धा बभूवुरिति शेषः। "चित्रार्पितारम्भ इवावतस्थे" इतिवत्।

६। शिवाभिरेणैर्मृगभेदैश्च सहिताद्वनान्न विगता नापसस्रुः। प्रगुणः सरलः 'ऋजावजिह्मप्रगुणा'वित्यमरपाठात् लक्षणया चित्ताकर्षी वैष्णववैणवः श्रीकृष्णमुरलीकृतो नादस्तस्मात्।

७। सुगहनेऽतिगभीरे गहने वने। एवं 'यदनुगमनाय निशि गहनमपि शीलितं तेन मम हृदयमिदमशरशरकीलित'मिति गीतगोविन्दे प्रयोगः।

८। हरिवंशे तदनुयायिनि मानाङ्कृते वृन्दावनयमके (१४-२८ श्लोः) चात्र प्रावृड्वर्णनमेव न ऋत्वन्तरवर्णनम्। कविना माघकवेः पदाङ्कमनुसरता द्रुतविलम्बितच्छन्दसा यमकसन्धानसहितेन सर्वेषामृतूणां वर्णनं संकेततो हृदि निहितं भङ्ग्या विहितञ्च। ललितैः कोमलैः कोकिलकाकलीभिः कोकिलमधुरध्वनिभिः काकलिभिरीषच्छब्दायमानैः स्वरैः संवलिका योजिनी कलिका कोरकावलिर्मधुजिता कृष्णेनाकलि सादरं धीरभावेन दृष्टा 'हलिकली कामधेनु'रिति वचनात्। बलिना बलरामेण पुनः वलवता वलिभ्रमरसंमिलिता परिमण्डलतया भ्रमता भ्रमरेण सङ्गता आम्रगता कलिका सहकारकलिका अवलि समचारि अदर्शीति यावत्, वल वल्ल संवरणे सञ्चरणे चेति धातुपाठात्। तस्य चतुर्दिक्षु सञ्चारेणोल्लासातिशय्यं प्रकटितमिति मत्तप्रकृतिकस्य तस्य विहारवर्णनम्। इत ऊर्द्धं हरिरिति प्रतिश्लोकं भिन्नतया व्यवहारभेदो दर्शितः।

कुसुमलीनतयाऽनवमालिकां हरिरपश्यदलं नवमालिकाम् ।
मधुलिहां दधतीमतिमानितां प्रतिगतां प्रमदाप्रतिमानिताम्(९) ॥१३॥

बकुलकुन्दममन्दसमुल्लसत्परिमलं सकलं किल मुष्णता ।
स मधुना यमुनामृदुवायुना हरिरसेवि गता शममुष्णता(१०) ॥१४॥

हृदि भिदेलिमदाडिमशोणिमप्रचुरकान्ति-(११)निरन्तररञ्जितम् ।
विपिनमैक्षत रम्यतमं हरिः परिपचेलिमवृन्तविराजितम् ॥१५॥

स्फुटकदम्बकदम्बककेशरान् कुसुमधन्वशरासनके(१२)शरान् ।
विरहिहृद्दलनाय निवेशितान् हरिरशङ्कत तत्र नवेशितान् ॥१६॥

घनघनाकुलसंवरवश्रव-प्रबलसम्मदमत्तशिखण्डिनाम् ।
बहु ददर्श स लास्यमुदञ्चित-प्रतत-(3a)सुन्दरचन्द्रकमालिनाम् (१३) ॥१७॥

---

९। नवमल्लिकावर्णनेन ग्रीष्माविर्भावः सूचितः । मधुलिहां भ्रमराणामतिमानिता-मत्यादरं दधती नवमल्लिका प्रमदाप्रतिमानितां नारीसादृश्यं प्रतिगताऽवाप्ता-ऽतिमानिताऽभिनवमल्लिकासौकुमार्येण प्रतिमानं सादृश्यं विद्यतेऽस्याः इति प्रतिमानिनी तस्या भावः प्रतिमानिता । नवमालिकाऽनवमालिकेति विरोधा-भासः । अनवमो जातितः श्रेष्ठः अलिर्यत्र सा इति तद्व्याख्या ।

१०। परिमलं गन्धं मुष्णता आहरणेन वहता । मधुना चैत्रेण वसन्तर्तुना वा । उष्णता ग्रीष्मकालोचितेति यावत् शमं गतेति वर्णनेन ग्रीष्मर्तुरेवाभिप्रेतः स्यात् ।

११। 'वियोगिनीमैक्षत दाडिमीमसा'वित्यादि नैषधपद्यं स्मरणीयम् । शोणिमप्रचुर-कान्तिरतिशयितलोहिताभा । 'शोण'शब्दात् भावे इमनिच् ।

१२। शरासनके नातिवृहति शरासने धनुषि । कदम्बकदम्बकानि नीपकुसुमवृन्दानि । नवं प्रत्यग्रमीशितमीशनं शक्तिर्येषां, वर्षास्वेवैषां कामोद्दीपकत्वादिगुणप्राचुर्यात् । प्रावृडत्र वर्णिता ।

१३। अत्रानन्तरे पद्ये च प्रावृड् वर्णिता । घनानां निबिड़सन्निविष्टानां घनानां मेघाना-माकुलंचाञ्चल्यं जनयतः सङ्कुरवस्य सम्मिलितगर्जितस्य श्रवेण श्रवणेन सम्मदमत्ताः प्रहर्षविह्वलाः शिखण्डिनोमयूराः, तेषां । चन्द्रकाणि मयूरपिच्छानि । 'प्रमद-सम्मदौ हर्षे' इति वैयाकरणाः ।

सकमलं कमलं वरकै[र]वै-रविरतं विरतं कनकै रवैः।
समरसः सरसः सुषमैरवेदिह सतो हसतो महिमै रवैः(१४) ॥१८॥
सुमधुरं मधुरङ्गि मधुव्रतैः सरससारससारसमाश्रितैः।
सकलहं कलहंसपतत्रिणः कलयतो लयतो ववृते क्षणः(१५) ॥१९॥
हरिमनोहररूपनिरूपण-प्रवणबाणविकाशिविलोचनम्।
तदतिविस्मयतः स्मितमातनोद् विकचकुन्दचयं किमु काननम् (१६) ॥२०॥
इह वने सकलर्तुविभावने त्रिभुवनेश्वरकेशवदेवने(१७)।
अखिलवत्सकुलं वृतदिङ्मुखं नवतृणेषु चचार यथासुखम् ॥२१॥

---

१४। सकमलं कमलं पद्ममण्डितं सलिलं 'कमलं क्लोम्नि भेषजे। पङ्कजे सलिले ताम्रे' इति त्रिस्वरे हैमः। वरकैरवैरुत्कृष्टकुमुदैरविरतसंश्लिष्टम्। कनकै रवैः नागकेशरच्छदैर्विरतं विशेषेण प्रीतिमत्तया मण्डितं नागरकेशरयुक्तम्। 'कनकं हेम्नि पुंसि स्यात् किंशुके नागकेशरे' 'लवः किञ्जल्कपक्ष्मणो'रिति च कोषः। रवलवौ यमकार्थमभिन्नौ। समरस इति श्रीकृष्णविशेषणं सर्वत्र गुणग्राहीत्यर्थे। सरसः सुषमैः सरोवरललामभूतैः कुमुदैः कैरवैश्च अवैदिति ज्ञातवानित्यर्थे क्रिया। सतो हसतो नाविलच्छत्रस्य वर्षास्विवापि तु हसतो दीप्तिशीलस्येति यावत् महिमैर्महिमसूचकै रवेर्मयूखैः। इत्थम्भूतलक्षणे तृतीया। 'नस्तद्धिते' इति महिमशब्दादर्शआदित्वादचि टिलोपः। शरद्वर्णनप्रसङ्गोऽत्रानन्तरे च श्लोके।

१५। पतत्रिणः पक्षिणः कलहंसस्य मधुव्रतैर्भ्रमरैः सकलहं समधुरताडनं लयतो गानतन्त्रीसाम्यात् कलयतः श्रीकृष्णस्य क्षण उत्सवो ववृते इति योजना।

१६। काननं कर्तृ स्मितमतनोत् ईषज्जहास अचेतने चेतनधर्माध्यासः। श्रीहरिदर्शने तस्यौत्सुक्यमायतैर्बाणपुष्पैः लोचनस्थानीयैः सूचितम्।

१७। देवने क्रीडाऽऽधायके। बाणानां कुन्दानाञ्चात्र हेमन्तशिशिरसन्धिवर्णनीयानां निवेशाद्व्याजेनोभयोरपि तयोरवतारः। 'हेमन्तधर्मः शिशिर' इति राजशेखरः (का. मी. १८ प्र)। ऋतुसंहारे हेमन्तवर्णने 'प्रफुल्ललोध्र' इत्यादिपद्ये मेघदूते च 'बालकुन्दानुविद्धं नीता लोध्रप्रसवरजसे'ति हेमन्तशिशिरयोर्वर्णने तथा दर्शनात्। मेघदूतपद्यव्याख्यायां मल्लिनाथः ''यद्यपि कुन्दानां शैशिरत्वमस्ति तथापि हेमन्ते प्रादुर्भावः शिशिरे च प्रौढत्वमिति व्यवस्थाभेदेन हेमन्तकार्यत्वमित्याशयेन बालेतिविशेषणम्।'' 'लोध्रपुष्पाणां शैशिराणा'मिति च निरदिशदिति न काऽप्यसंगतिरत्रेति। वत्सकुलं यथासुखं यथेच्छं वृतदिङ्मुखं सकला दिशो आवृत्य चचार।

हरिहरी मुहुरीक्षितकाननौ व्यहरतां ललितस्मितकाननौ(१८)।
सुकृतिभिः पशुपालकबालकैः सह मुखाम्बुजचुम्बिनवालकैः ॥२२॥
कृतमलिम्लुचशीलविडम्बनाः कृतपरस्परयोजनभोजनाः।
अनुसृतप्रतिलब्धधना हरे-रनुगता(१९)मुदिता इह रेमिरे ॥२३॥
(30b)अलिकुलेन समं कलमुज्जगु-र्युगपदुत्पतनेन तमन्वगुः।
शिखिसखाः सुखिनो ननृतुस्तदा(२०)सहरयस्तरुमारुरुहुर्मुदा ॥२४॥
चपलवत्सकुलावनतत्परे सति च दूरगते जगदीश्वरे।
अहमिमं प्रथमं कथमाप्नुया-मिति मतिं विनिधाय ययू रयात् ॥२५॥
इति वने सखिभिः सह केशवे विहरति स्फुटनाटितशैशवे।
सपदि तं विजिघांसुरघासुरोऽजगरविग्रहमुग्रतरोऽकरोत्(II) ॥२६॥
खरतरारुणदीप्त्यरुणेक्षणं प्रसृतचञ्चलजिह्वमनुक्षणम्।
शितशितैर्दशनैरतिभीषणं विषविषङ्गि विनिश्वसितोल्वणम् ॥२७॥
वपुरपूर्वममुष्य हरिद्रयात् किमनुलिप्तमकारि हरिद्रया।
उरुगुरु स्फुरदङ्ग सुपीवरं प्रहसति स्म(२१)स्रवत्तु महीधरम्(युग्मकम्) ॥२८॥
अथ दिवं स पिब[न्निव]जिह्वया पृथुरशेत पथि ग्रसनेच्छया।
मुहुरहो विलिहन्निव सृक्कणी विवृतवक्त्रगुहाकुहरः फणी(२२) ॥२९॥
तमनुभूय तथाऽति-(31,32a)विलक्षणं फणमणिद्युतिभर्त्संसितपूषणम्।
हरिपदद्वयसंश्रयनिर्भयैः शिशुभिरेवममादि सविस्मयैः ॥३०॥

---

१८। ललितस्मितकाननाविस्यत्र समासन्तः शैषिकः कप्।

१९। मलिम्लुचाश्चोरप्रकृतयः। अनुसृतप्रतिलब्धधना इत्यस्य मुख्यतास्त्येव प्रयोगः। मलिम्लुचपदेन लक्षणयाऽव्यवस्थिताचारत्वं बोध्यते। परस्परयोजनं परस्परभोजनं च (interdingin) तेषां स्वैराचारः। परं गोपानामानन्दातिशय्येन वनोत्सवे (picnic) विहिते एते इति न दुष्टतामावहत इति कवेराशयः।

२०। हरयो मर्कटाः। तैः सहैतेऽपि गोपाः।

२१। हरिद्रयात् श्यामवर्णोच्छ्वासादपूर्वममुष्यासुरस्य वपुः। हरिद्रया लिप्तत्वात् गरिकस्रुततनिर्झराम्भःसिक्तस्य श्यामस्य महीधरस्य तुल्यता स्यात्। पुराणवर्णनमनुसृतमत्र।

२२। अत्र ३७ श्लोके च स्वभावोक्तिरलङ्कारः। 'स्वभावोक्तिरसौ चारु यथावद्वस्तु-वर्णनमिति'लक्षणात्।

सुहृद आशु बलात् किल काङ्क्षति प्रसितुमत्र न पथ न शक्ष्यति ।
अरिदरे(२३) हि हरिः परिरक्षति द्रुतमसौ बकवद्र भुवि लेक्ष्यति(III)॥३१॥

इति वचःसमकालकमेव तान् फणभृदाहृत वात-(२४)समाहितान् ।
उदरकन्दरमध्यमवीविशत् तदनु तद्वदुपेन्द्रमचीकृषत् ॥३२॥

हरिरथो गिरिराज इव स्थिरः स्वजनवत्(२५) पररक्षणतत्परः ।
सुविममर्श यथाऽसुभृतां धृति-र्भवति तत्र यथा च रिपोर्मृतिः(IV) ॥३३॥

अथ ससर्प स सर्पपतिं प्रति द्रुतगतिः सुमतिर्जगतां गतिः ।
हरिरगीर्यत तेन तदा शिशुर्दरभरादमरा दिवि चुक्रुशुः ॥३४॥

गलगतो भगवान् ववृधेतरां सपदि स्म बिभेद च कन्धराम् ।
तदनु तेन पथा रिपुकुक्षितः शिशुगणो निरगादभिरक्षितः ॥३५॥

(31, 32b)(२६)शिशुभिरेव सहाजगरासवः समुदयुस्तदनुव्रजनेऽसवः ।
बहिरगुः पुनरोरगविग्रहं(२७) न विविशुः खलु सत्स्वतिदुर्ग्रहम् ॥३६॥

अघमयं विनिहत्य चतुर्भुजः(२८) प्रमुदितान् स विधाय सुधाभुजः ।
कुसुमवृष्टिभिरेभिरथार्चितः सुविजहार वने स्वजनैर्वृतः ॥३७॥

गगनमध्यमथोपगते रवौ सखिगणेन समं बलकेशवौ ।
उपकलिन्दतटं सुखशाद्वलेऽशितुमुपाविशतां धरणीतले ॥३८॥

---

२३। अरिभ्यः शत्रुभ्यः दरो भयं, तस्मिन् सम्प्राप्ते इति सति सप्तमी ।

२४। फणभृत् सर्पाकारोऽघासुर एतान् गोपबालानहृत जग्रास। वातसमाहतान् वात्यया पीडितान्।

२५। स्वजनवदित्यर्थः, 'तेन तुल्यं क्रिया चेद्वति'रिति वतिर्योज्यः ।

२६। अत्र ने. मा. लिपौ पत्रसंख्यैकाधिका नर्शिता। अस्माकमनुलिपौ द्वयोः पत्रयो र्निर्देशास्तत्कृतः। एवमपरत्रापि।

२७। पुनः आ उरगविग्रहमिति च्छेदः। आ वाक्यारम्भे 'आ प्रगृह्य स्मृतौ वाक्येऽपी'त्यमरः।

२८। चतुर्भुजो विष्णुविग्रहः श्रीकृष्णः। सुधाभुजोऽमृतभोजिनो देवान्।

सुकृतिगोपवसुतैरमलं जलं कुसुमदाम नमत्सरसं फलम्।
उपदधे(२९) जितसिद्धरसायनं स्वभवनादुपनीतमुपायनम् ॥३९॥

सलिलधौतकराङ्घ्रिमुखाम्बुज-स्तदखिलं प्रविभज्य चतुर्भुजः।
प्रथमतर्पितरामसुहृद्व्रजः(३०)स्वयमथो बुभुजे गरुड़ध्वजः(V) ॥४०॥

विविधकेलिकलापरिहासतः सखिभिरस्य तदा वसतः सतः।
चपलवत्सकुलं तदरक्षणादभिविवेश वनं प्रहलक्षणात्(३१) ॥४१॥

(33a)तदविलोकनसम्भृतसम्भ्रमा-नशनतो विरतो विहितोद्यमान्।
सुहृद आशु निवार्य हरिर्घनं तदनु वत्सपदं(३२)गतवान् वनम् ॥४२॥

समनुसृत्य वनेऽखिलवत्सका-ननधिगत्य निवर्त्य च बालकान्।
किमिदमित्यवधाय च वेधसः कपटमप्रकटं तदबुद्ध सः(VI) ॥४३॥

भगवदद्भुतशक्तिबुभुत्सुना जगति तां प्रथिताञ्च विधित्सुना।
पिदधिरे विधिना गिरिगह्वरे क्वचन ते हि सता तदुपह्वरे(३३) ॥४४॥

इति विरिञ्चिकृतात् प्रतिलोमतः — — — (३४)।
सपदि तद्वयसं स तदाकृतीनहह तावत एव तदा कृती ॥४५॥

दिनमदो बने कृतकेऽलिभिर्मुखरिते शिशुभिः कृतकेलिभिः।
भगवताऽथ सहासममायितैः प्रतियये भवनं समयायि तैः ॥४६॥

---

२९। सुकृतिगोपसुतैः स्वकर्मचतुरैः गोपैः सार्थकजन्मभिश्चेति ध्वनिश्च। उपदधे समीपे स्थापितम्। उपायनं चेति प्रकरणात् सामर्थ्येन २-३ श्लोकयोर्यस्य सूचनम्।

३०। रामसुहृद्व्रजो हलधरगोपकुमारसमूहः।

३१। प्रह आग्रहो दैवविधानञ्चेति श्लेषः।

३२। वत्सपदानि गोवत्सचरणचिह्नमनुसृत्य—अव्ययीभावसमासः।

३३। सता प्रकटेन विधिना ब्रह्मणा ते गोवत्साः उपह्वरे रहो पिदधिरे प्रच्छादिताः। 'रहोऽन्तिकमुपह्वरे' इत्यमरः।

३४। विरिञ्चिकृतात् ब्रह्मणा दिष्टात् प्रतिलोमत इति प्रतिकूलाचरणादिति लक्ष्योऽर्थः। द्वितीयचरणे एवमनुलिप्यामपूर्णता। प्रकरणाद्यमकानुरोधात् पुराणविवरण-संवादाच्चैवं पाठः स्यात 'प्रतिविधातुमनाः प्रतिलोमतः'।

समुपगुह्य शिशूनतिहार्दतश्चटुलवायुसमूहकृतार्दतः(३५)।
स्तनमनन्तमुदः समुपाययन् स्त्रिय उताशिष ऊर्ध्वमचारयन् ॥४७॥

हषितवत्सकुल-(३३b)प्रतिसंश्रव-प्रचलदङ्गपरिस्रवदश्रवः।
स्तनघनस्नुतसत्पयसा भुवः प्रसिषिचुः प्रचुरं वरधेनवः ॥४८॥

अथ यथास्वमिमाः स्वयमागता-निह लिहन्ति मुहुर्बहुहुङ्कृतान्।
स्नुतपयः पिबतः प्रियवत्सका-नतिमुदा सततोद्गतवत्(३६)स्वकान् ॥४९॥

अघविघातमघापहरं पर-स्त्रिजगदुः शिशवः स्वजनेश्वरम्(३७)।
समुपभुज्य ततो निजमन्दिरे प्रमुदितैः पितृभिः सह शिश्यिरे ॥५०॥

उषसि शृङ्गरवेण विबोध्य तान् मधुरिपुः स पुरेव समुत्थितान्।
सपदि मातृभिरञ्चितभोजितान् समुपगृह्य ययौ वनमूर्जितान्(३८) ॥५१॥

इति स वत्सरमेकमनाकुलं नवनवीकृतहार्दकगोकुलम्।
हरिररीरमदद्भुतमायया गिरि विधिञ्च वि-(३९)मोहितवान् यया ॥५२॥

चरितमेतदलौकिकमैश्वरं समवलोक्य विरिञ्चिरनश्वरम्।
फलवतीः स विधाय निजा दृशः पशुशिशूनददर्शदतादृशः(४०) ॥५३॥

---

३५। चटुलवाय्विति चञ्चलया वात्यया विहितादर्दात् पीडनात्। उतापि च स्त्रिय आशिष उदचारयन्निति भावः।

३६। सततोद्गतवत् स्नुतं पयः पिबत इत्यर्थः। अविरतं पयःस्रवाः सुरभीमनुचक्रुरिति पञ्चमे (५।४९) ग्रन्थः स्मरणीयः।

३७। अघं दुःखं पापञ्च। स्वजनश्चश्वरश्चेति विग्रहो ज्यायान्। भगवानपि गोपवटु-रसाविति तात्पर्यम्।

३८। भोजितान् तत्र चोर्जितान् कृतबलाधानान्। वनमूर्जितान्(पा)। 'शृङ्गरवेणे'त्यत्र शृङ्गं शृङ्गाकारो वाद्यविशेषः शिङा इति भाषायाम्।

३९। गिरिविरिञ्चिविमोहितरान् (पा)। यया मायया ब्रह्माणमपि विमोहितवान्। ब्रह्ममोहनमिति भागवते प्रकरणनिर्देशः। हार्दकमान्तरप्रियता। हार्दमित्यर्थे हार्दकम्। गिरि वाक्ये इति कथञ्चित् योजना।

४०। अनश्वरं मरणशीलात् व्यावर्त्तकमैश्वरं भगवत्सम्बन्धि चरितम् अददर्शदिति लुङ् णिजन्तात् लुङ्। अतादृश इति पशुशिशूनित्यस्य विशेषणम्।

(34a)तदवलोकनतो वसुधा वना-दतिरयेन तदा कृतधावनाः ।
स्वतनयैः समगंसत बल्लवाः सुरभयश्च सता खशवल्लवाः ॥५४॥

निजसुताधिगतेरतिनिर्वृ तेरलसमीभिममूरभिकाङ्क्षिते(?) ।
शिशुपशुप्रकरे सुकृते हरेरिति मतिः समभू दुपसंहरे(४१) ॥५५॥

प्रविविशुः शिशवः पशवस्ततः सपदि कृष्णतनुं प्रतिलोमतः ।
ददृशिरे च तदा परमेष्ठिना प्रबलविस्मयनिश्चलदृष्टिना ॥५६॥

जलदमण्डलनीलकलेवराः प्रचुरचारतड़िन्तुलिताम्बराः ।
हृदिसदूर्ध्वतनूरुहलक्षणा शरदिजेन्दुमुखाः कमलेक्षणाः ॥५७॥

करिकराकृतिदीर्घचतुर्भु जा विधृतचक्रगदाजलदाम्बुजाः ।
अमलचञ्चलकाञ्चनकुण्डला मुकुटाङ्गदसत्कटकोज्ज्वलाः ॥५८॥

सुरुचिरं हरिचन्दनचर्चिता-स्तुलसिकानवदामभिरर्चिताः ।
अलिकुलाकुलया(34b)वनमालया दिनकरायुतभानुचयालयाः(४२) ॥५९॥

[ चतुर्भिः कुलकम् ]

कनकदण्डवदुत्तममेधसा(४३) क्षितितले प्रणिपत्य स वेधसा ।
तदतिभक्तिभरैरपुनर्भवेऽखिलमुखैर्भगवानभितुष्टुवे ॥६०॥

जय जयाश्रय सत्सुखचिन्मय त्रिगुणवर्जित कृष्ण सदाश्रय ।
स्फुरति नाथ पृथक् त्वदविद्यया जगदिदं सममुद्यदविद्यया(४४) ॥६१॥

तव कलाः सकलाः किल देवता जगति धर्ममिहाखिलदेवताः ।
अवितुमीश्वर यास्यवतारतः सुररिपून् समपास्य बतारतः ॥६२॥

---

४१ । उपसंहरे उपसंहारेऽवसान इति यावत् ।

४२ । भानुचयानामयुतसूर्याणां किरणसमूहानामालया आश्रयभूताः । वनमालया चेति यावत् ।

४३ । उत्तममेधसा सुबुद्धिना । समासान्तोऽसिच् । कनकदण्डवत् प्रणिपत्येति वर्णोत्कर्षस्य प्रणामपरिपाट्याश्च वर्णनम् ।

४४ । अथ वाक्यारम्भे । अविद्यया सममुद्यत् प्रकाशमानमिदं जगत् त्वत् त्वत्तः पृथक् पृथक् न स्फुरति त्वद्व्यतिरिक्तं न भवति इत्येकोऽर्थः । नाथेति सम्बोधनं स्फुरति त्वद्व्यतिरिक्तं भवतीत्यपरोऽर्थः ।

त्वमसृजो निखिलं महदादितः
कमललोचन कृष्ण मदादितः ।
इदमनर्हमिहाचरमाप ते
सविधतो(४५)ह्रियमीश रमापते ॥६३॥

तदिदमादिगुरौ क्षमयामि ते
त्रिजगदुद्धरणक्षम ! यामि ते ।
चरणपद्ममहो महिमाकला
वयमदर्शिम होमहिमाः कलाः(४६) ॥६४॥

इत्थं मुहु (35a)र्मुहुरमुं प्रतिशुद्धमेधाः
स्तुत्या पुनः पुनरभिप्रणिपत्य वेधाः ।
आलोकयन्नथ निवृत्य निवृत्य काम-
मानन्दसान्द्रहृदयः स जगाम धाम ॥६५॥

हरिरपि विपिनान्तां सञ्चरन् पुष्पितान्तां
सह सखिभिरखिन्नः सायमायाद्व्रजाय ।
विहितहितविहारो वल्लभो वल्लवाना-
मशनशयनपानैर्यामिनीं तां निनाय ॥६६॥

इति **हरिचरिता**ख्ये नव्यसत्काव्यमुख्ये
प्रसरदमृतधारे वर्णितेशावतारे ।
कृतकलुषनिरासे तुष्टबालाविलासे
जयति गुणगरिष्ठः **सर्ग** एषो नु **षष्ठः** ॥*॥

---

४५। 'समीपे निकटासन्ने'त्युपक्रम्य 'सदेशाभ्याससविधसमर्यादसवेशवदि'ति पठितममरेण सामीप्यार्थे। सविदतो (पाः) । ते सविधतस्त्वत्तः सान्निध्यात् ह्रियमाप लज्जितोऽस्मीति प्रमादे लिट् उत्तमपुरुषे ।

४६। महिमा इत्यर्श-आद्यचि 'नस्तद्धिते' इति टि-लोपः। होमहिमाः कलाः आहुत-होमशिखावन्नोष्णा परन्तु ज्योत्स्नावदाह्लादिनीः। भगवत ऐश्वर्यस्य नेदं प्रकटनं परन्तु तन्माधुर्यस्येति भावः ।

# हरिचरितम्

## सप्तमः सर्गः

अथ वार्षिकैस्तिमिरमेदुरैर्घनैः परिरेभिरे दश दिशो घनाघनैः ।
अभिसङ्गतै रुचिरसैरलं दिवा निरधारि नैव निशि नापि वा (१)दिवा(I) ॥१॥
क्व विधुप्रभाद्युतिपटी पटीयसी क्व विशङ्कटा रविरुचिर्महीयसी ।
क्व च तारकानिकरमौक्तिकावली खलिता बुधेन बुबुधे न सा स्थली ॥२॥
विनि-(35b)मीलितं क्व हिमदीधितीक्षणं(२) मृदुलानिलश्वसिततत्यनुक्षणम् ।
किमु मन्द्रमेघरवघूर्णनध्वनि प्रतिपन्ननिद्रमधुना नभोऽजनि ॥३॥
धृतचञ्चलावलीमनोरमाञ्चला बिसकुञ्चिकाललितमौक्तिकोज्ज्वलाः ।
नवनीरजा नभसि कृष्णमूर्तयः परिरेजिरेऽस्तरविभाभवार्तयः(३) ॥४॥
प्रसभप्रमोदितभुजङ्गभोजना(४) धृतशार्ङ्गिजीवितजनानुरञ्जनाः ।
ववृषुर्निरन्तरममी रसं वरं रसयाऽपृथग्विदधतोऽलमम्बरम् ॥५॥

---

१। सर्गेऽत्र मुख्यतो मञ्जुभाषिणी वृत्तम् । प्रावृट् पुराणेषु वृन्दावनयमकादौ च यथा वर्णितं तथाऽत्रापि । विशेषतो महाकाव्यलक्षणवैगुण्यहानिः फलम् । दिवाऽऽकाशे-नालमत्यर्थं रुचिरसैर्दीप्त्या जलैश्चाभिसङ्गतैर्घनाघनैर्मेघैरित्यन्वयः । जनैरिति निरधारीत्यस्यानुक्तं कर्तृ ।

२। हिमदीधितेश्चन्द्रस्य सचेतनस्येव ईक्षणं लोचनमनुक्षणं सततं मृदुना सशीकरं वहताऽनिलेन श्वसिततत्या निःश्वासधाराव्यञ्जनेन निमीलितमिति कविप्रौढिः ।

३। चञ्चलावली विद्युच्छ्रेणी रविभायाः सूर्यदीधितेस्तन्नायिकाया इव विरहिण्याः सम्भूता आर्तयो मेघकृष्णाकारेण मूर्ता इव कविप्रौढोक्त्योपन्यस्ताः ।

४। भुजङ्गभोजना भेका इति कथञ्चिदायाति । मेघव०र्णनमनुस्रियते । शार्ङ्गी कृष्ण एव जीवितं येषां तेषां गोपानामनुरञ्जनाः । रसया भुवाऽम्बरमाकाशमपृथग्विदधत एकाकारेण व्याप्नुवन्तः । "एतत्तद्धृतराष्ट्रचक्रसदृशं मेघान्धकारं नभ" इत्याद्यन्यत्र विवरणदर्शनात् । वरं रसं जलममी मेघा ववृषुः । यमकार्थं वरमित्यपार्थं विशेषणं सोढव्यम् । एवं सप्तदशश्लोके बह्विति क्रियाविशेषणतया समर्थनायोग्यमपि । तथाऽष्टादशश्लोके सतां धनं परमैश्वर्यभूतं सतां सहायकमिति कल्पनायामर्थनीयमप्य-पार्थमेव । अत्रार्थे 'सप्तैताः समिधः श्रिय' इति भारते स्मरणीयः प्रयोगः ।

अमृतेन तेन धरणी सुतर्पिता सनगाः प्लवा विरुरुवुश्च दर्पिताः।
वसुधाऽऽस्त मारकतिकेव शष्पिणी पुरुपद्मरागघटितेन्द्रगोपिनी(५) ॥६॥

इह कर्हिचिद् भगवता बलं विना प्रयये वनं जनहितावलम्बिना।
प्रथयिष्यताऽरिदरकारि पौरुषं बहु कालियेऽति(६)वहताऽरिपौरुषम् ॥७॥

विचरन् सुखेन सखिभिः समन्ततः स ददर्श वारिविधिना समन्ततः।
यमुनागतं ह्रदमपार-(36a)वारिभि-र्विषभीषणैर्वृतमपारवारिभिः(II)(७) ॥८॥

अनिलोच्छलज्जलतरङ्गसङ्गतैर्विषवह्निना सपदि नीरसङ्गतैः।
ज्वलितैश्च तीरतरुभिर्विहाय स ह्रदमन्तरनुगान्नु विहायसः ॥९॥ (युग्मकम्)

भुजगालयं रमणकं हि कालियः परिहाय तत्र वसति स्म सप्रियः।
भुजगाशनः प्रभवतीति कम्पितः सततं पुरोऽत्र तु ह्रदे सुनिर्वृतः ॥१०॥

उदवासमत्र चरतो हि सौभरेः पुरतो जहार स कुलं खगो हरेः।
स शशाप तं पुनरिहायियासतः शतधा दलिष्यति शिरस्तवासतः(८) ॥११॥

भुजगारिशापमिममुद्धवद्भयः कलयाम्बभूव भवने स कालियः।
सुहृदः सुपर्वऋषिनारदात्ततः श्रुतमात्र एव ह्रदमेतमागतः ॥१२॥

---

५। प्लवा भेकाः। शष्पाणां घासानां मरकतमणिप्रभत्वम्। तथेन्द्रगोपकीटानां पद्मरागसादृश्यम्।

६। कालिये रिपौ बहु पौरुषमति अतीव वहता भगवतेत्यन्वयः। अत्र बलं विनेत्या-करानुसरणमिहान्यत्र च भागवतचम्पूप्रभृतौ।

७। ततः सखिभिः समं सुखेन विचरन् वारिविधिना मुखप्रक्षालनादिकृत्येन स श्रीकृष्णः समन्ततश्चतुर्दिक्षु अपारवारिभिर्वृतं तथाऽपारमपारगतम् यद्वास्तस्य सन्ति ये तत्र ये वसन्ति। अस्त्यर्थे इनिः। तैर्विषभीषणैः सर्पैर्वृतञ्च। तथा सपदि नीर-सङ्गतैस्तीरतरुभिरुपलक्षितं ह्रदमनुगाननुचरान् गोपान् विहाय ह्रदमन्तर्ददर्शेति च सम्बन्धः। विहायसो ज्वलितैराकाशात् दीप्तैः।

८। उपनिषत्सु श्रुतमूर्धविघटनसदृशं वृत्तमत्र भङ्ग्योट्टङ्कितम्। इहायियासतोऽसतः षष्ठ्येकवचने। अत्रागमनसमकालमेव मरणमिति शापः।

पशुभिः स गोपशिशुभिः पिपासुभिः सलिलं निपीय सहसा गतासुभिः ।
इह तीरभूमिमभितः प्रतस्तरे न – भर्त्सिताऽपि(36b) तदियं दया हरेः(९) ॥१३॥

शमनस्वसुर्मुखे मुदाऽरमञ्जसा विषवीचिलोलरसनं तमोजसा ।
ह्रदमित्यवेक्ष्य हरिणा रिरंसया समचिन्ति कालियफणीन्द्रहिंसया ॥१४॥

यमुनाऽमुना विषधरेण दूषिता न निपीयते न कलहंसभूषिता ।
इह तन्मया सपदि दम्यतां खलः पृथिवीमवातरमतोऽर्थतः(१०)किल(III) ॥१५॥

इति निश्चितः परिकरं बबन्ध स प्रतिनन्दयन् गगनगामृतान्धसः(११) ।
ह्रदतीरसम्भवकदम्बभूरुहं प्रपतन् ह्रदे मुहुरहीनमूमुहत् ॥१६॥

बहु बाहुदण्डयुगलं जले क्षिपन् क्षुभितं चकार ह्रदमुच्चमानयन्(?) (१२) ।
परमं दरं विषधरा प्रपेदिरे पुनरब्धिमन्थनमिदं च मेनिरे(IV) ॥१७॥

अथ कालियः कलितकृष्णसङ्गमः क्रुरुषा ययौ सतनयः ससम्भ्रमः ।
प्रदशन् भृशं मधुरिपुं सतां धनं द्रुतमानिनाय बहुभोगबन्धनम् ॥१८॥

स मुमूर्च्छ बालचरितं(37a)विडम्बयन् स्वजनागमाय समयं वितर्कयन् ।
तमवेक्ष्य सर्पकृतदर्प-(१३)माकुलाः शिशवो व्रजं ययुरपास्तगोकुलाः ॥१९॥

तदुदीरितां हरिकथामसम्मता-मधिगम्य वज्रपतनेन सम्मिताम् ।
सयशोदनन्दबलसंयुतो व्रजः सकलस्तदाप ह्रदमार्तमाव्रजन् ॥२०॥

चपलं स बालमतिरिति प्रवेशितः स्थविरस्तिरस्कृतमतिः सुदृष्टितः(१४) ।
स ददर्श नन्द उरुभोगवेष्टितं गतसत्त्वमात्मजमपासुचेष्टितम् ॥२१॥

---

९ । भर्त्सिता भर्त्सितसम्बन्धिनीयं भगवतो दया । अस्यैव शक्तिपातप्रख्यस्यानुग्रहस्य संरम्भयोग इति विदग्धानां संज्ञानिर्देशो यस्य जयविजयशिशुपालाद्याः पात्राणीति पुराणाख्यानेषूच्यन्ते ।

१० । अतोऽर्थतोऽस्मादेव प्रयोजनात् । किलेति प्राकाश्ये ।

११ । आकाशस्थान् देवान् प्रतिनन्दयन् अहिं सपरिजनं कालियममूमुहदिति सम्बन्धः ।

१२ । ह्रदमुच्चैम...(पा)

१३ । सर्पकृतदर्पमिति कर्मधारयसमासः ।

१४ । सुदृष्टितः सुचारुदर्शनप्रणाल्या इति तृतीयार्थे सार्वविभक्तिकस्तसिः ।

विनिधाय लोचनयुगं हरेर्मुखे बत भित्तिचित्रवदमुष्य सम्मुखे ।
स तदाऽऽस्त(१५)निश्चलकलेवरस्तदा-ऽद्भुतमेतदस्य यदभून्न हृद्भिदा ॥२२॥
सकलाङ्गसङ्गतभुजङ्गपीडितं तनयं निरीक्ष्य कृतकूटमीलितम्(१६) ।
बहुबन्धुविघ्नितह्रदप्रवेशया समताडि निर्भरमुरो यशोदया ॥२३॥
महिलाः स्म तत्र मिलिताः परस्परं विलपन्ति विष्णुविरहे स[म]स्वरम् ।
प्रविशाम(37b)काममिह कालिये ह्रदे वनमालिसङ्गमुखसारसम्पदे ॥२४॥
अतिचण्डकुण्डलिकृताङ्गपीडनेऽप्यलमस्मदीयवदनावलोकने ।
मुखमस्य पश्यत समुल्लसत्स्मितं विकशत्सरोरुहवरेण सम्मितम् ॥२५॥
हरिमन्तरेण न विभास्यति व्रजः पृथुशोकवेगविहताखिलव्रजः ।
दिवसो विभाति नहि भानुना विना न कदाचनापि रजनी विनेन्दुना(V) ॥२६॥
शिशवो जजल्पुरथ तेऽल्पबुद्धयः पशुपालदण्डदलिताखिलाहयः ।
वयमुद्धराम सहसा हरिं ह्रदादिह तत्कृतोपकृतिनिष्कृतिस्तदा ॥२७॥
अपरे तु तत्र सममेव बल्लवा विषभक्षणाहिगणवीक्षणोद्भवात् ।
भयतो न किञ्चन तदा प्रचक्रिरे बलदेवमेव हृदयेन भेजिरे ॥२८॥
अथ तत्र युववृद्धबान्धवा-नवलोक्य शोकभयभूतविक्लवाम्(१७) ।
स्मृतिमीश्वरस्य विदधत् पराक्रमे मुषली तदाऽभिलपितुं प्रचक्रमे ॥२९॥
(38, 39a)पुरुषोत्तम त्वमसि विश्वकारणं भवता समं भुवनपालका रणम् ।
न कदाच[ना पि]कर्तुमीशते चरितं किमेतदतिचित्रमत्र ते ॥३०॥
न निरीक्षसे किमतिनिर्ममो हितान् बत मातरं पितरमीश मोहितान् ।
व्रजवासिनां किमथ वामलोचना न हि पश्यसीह गलदश्रुलोचनाः ॥३१॥
सुरसुन्दरीः सुरतयेऽवतारिताः(१८) किमुपेक्षसे स्वयमहो प्रतारिताः ।
भवदाश्रया अपि न कुर्वते यथा जगदीश्वरेह कुरुषे कथं तथा(VI) ॥३२॥

---

१५। निश्चलश्चित्रार्पितारम्भ इवेति यावत् ।

१६। कपटाक्षिनिमीलनेन भगवता स्वकीयमर्त्यभाव आविष्कृतः ।

१७। शोकभयेन भूतानि पिशाचादीनीव विक्लवा व्याकुलास्तान् ।

१८। सुरतयेरसस्य परायाः काष्ठायाअधिगतये भगवता आशंसया रसविधेरवतारिताः स्वकीयशक्तिभूताः गोपीरिति यावत् । तथा च 'आशंसया रसविधेरवतारितानां'-मित्यभियुक्तानां पद्यांशे ।

भवदीयवाहनभुजङ्गभोजनात् प्रपलायितात् परिभवः प्रभो जनात्।
न युनक्ति ते द्विपदसह्यतेजस-स्त्रिजगद्गतेरधिपतेर्महौजसः ॥३३॥
अवलोकिता मनुजभावनाऽप्यलं(१९)समदर्शि तद्बहुलबालचापलम्।
तदयं हरे विषधरोऽभिदम्यतां निजबान्धवैः सह चिराय रम्यताम् ॥३४॥
इदमग्रजग्रथितवाक्यमालया विहितस्मृतिर्यदुपति-(38,39b)र्यमालयात्।
स पुनर्निवृत्त इव बाहुदण्डयोः समुदक्षिपद्(२०) द्वयमतिप्रचण्डयोः ॥३५॥
द्रुतमच्छिनच्छतमसौ भुजङ्गमान् बत बन्धनाय(२१)विहिताङ्गसङ्गमान्।
अथ कालियस्य फणमेव मध्यमं सहसाऽऽनमय्य समरोहदश्रमम् ॥३६॥
प्रननर्त्त मेरुगुरुभारमावह-न्नलमङ्घ्रिणा शिशिरतल्पताऽऽवहम्(२२)।
कुसुमानि पेतुरथ कृष्णमूर्धनि प्रसभं बभूव दिवि दुन्दुभिध्वनिः ॥३७॥
शतशीर्षकस्य शिर उन्ननाम यत् सहसा तदेव भगवाननामयत्।
पदपद्मयोः पटुतरावकुट्टनै-र्दलपन्नखैर्विजितवज्रघट्टनैः ॥३८॥
रुधिरं निरन्तरमहो समुद्गिर-न्नतिवेगनिःश्वसितसन्ततिं किरन्।
दयिताभिरवेक्ष्य ततोऽभितुष्टुवे हरिराभिरास्त दयितोदयोद्भवे(२३)(VII) ॥३९॥
भगवन् यदाहुरमलं परं पदं विरजस्तमस्कमशोकताऽऽस्पदम्।
तदसि त्वमत्रभवतः स्तुतावलं(40a)न[चतुर्मुखोऽपि कथमत्र नो बलम्(२४) ॥४०॥
क्व भवान् गुरुर्भुवनमण्डलाश्रयः क्व बिलेशयोऽल्पबल एष कालियः।
क्षणमप्यसौ तव भरं न शक्ष्यते विकलो मुमूर्षु रधुनोपलक्ष्यते(VIII) ॥४१॥
करुणानिधे त्वदनुकम्पनीयतां स्त्रिय आवहन्ति हृदि सोपनीयताम्(२५)।
अयमत्र भिक्षितपतिप्रदानतः स्वनुकम्पतां निजजनः सदा नतः ॥४२॥

---

१९। तव मनुजभावना अवलोकिता नरवद्व्यवहारोऽस्माभिरवलोकितः। तथा च बहुलबालचापलम् अलं पर्य्याप्तं समदर्शि दर्शितं त्वयेति शेषः।

२०। बाहुदण्डयोर्द्वयं समुदक्षिपदित्यन्वयः।

२१। इतरेतरेषां भोगैर्बन्धनाय पाशीकरणाय।

२२। शिशिरतल्पताऽऽवहमापाततोऽत्युष्णमपि भगवत्पक्षेऽतिशीतलानुभवं मेरुगुरुभार-मङ्घ्रिनाऽऽवहन् प्रननर्तेत्यन्वयः।

२३। दयितस्य कालियनागस्योदयोद्भवे श्रेयोहेतोर्निमित्ते भगवत्चरणकमलस्पर्शकृते।

२४। 'महिम्नः पारन्त' इत्यादि महिम्नः स्तोत्र इव।

२५। हृदि साऽनुकम्पनीयता उपनीयतामाश्रीयताम्। स्त्रियो वयं त्वदनुकम्पायोग्या इति पूर्ववाक्यस्याशयः।

हरिरन्वकम्पत स मञ्जुभाषिणीरतिभक्तिमूक्तिकुसुमोपहारिणीः ।
न ननर्त(२६)पूर्ववदथाभणत् फणी स कथंकथञ्चिदिदमुच्चरन् व्रणी ॥४३॥
जय कृष्ण निर्गुणतया तव स्तवः परमेष्ठिनाऽपि विहितो न वास्तवः ।
अथ कल्पितैरिह गुणैः स्तुवीमहि स्वयमेव देव न धृतिं लभेमहि ॥४४॥
सुखचिन्स्वरूप तव देव किञ्च न प्रियमस्ति नाप्रियमपीह किञ्चन ।
भवदर्चनाय किमहं समाहरे जगदीश्वर व्यपनयामि वा हरे ॥४५॥
न तव स्तवार्चनविधावतः(40b)क्षमे कृपयैव केवलमिह प्रसीद मे ।
विहितागसोऽपि तनयस्य हि क्षमां कुरुते पिता त्रिजगदीश रक्ष माम्(IX) ॥४६॥
अथवा मुकुन्द मम दन्दशूकता विहिता त्वयैव तदियं क्रियोचिता ।
परमन्यथा तु रचिते प्रवर्त्तने विषयो भवामि गुरुदण्डपातने(२७) ॥४७॥
तदपीश्वरेण भवता कृतो दमः शिरसा गृहीत इह भूषणं मम ।
न पुनर्वरोऽपि परतोऽत्र सम्मतस्तदिहापिधेहि(२८)किमहं करोम्यतः ॥४८॥
इति सूनृतेन वचसा प्रसादित-स्तमुवाच विष्णुरुरगं ह्रदादितः ।
जलधिस्त्वया त्वदनुगैरपीयतां(२९)यमुना जलैरपविषेह पीयताम्(X) ॥४९॥
तव मूर्ध्नि वीक्ष्य च मदङ्घ्रिपङ्कजं गरुड़ो न कालिय करिष्यते रुजम् ।
चिरमास्यतां सुखमवाप्तसिन्धुना भवता भुजङ्ग सकलत्रबन्धुना ॥५०॥
अथ वासुदेववचनेन तत्क्षणं त्रिरमुं विधाय भुजगः प्रदक्षिणम् ।
अभिवन्द्य सर्व-(41a)परिवारसंवृतः(३०)प्रससार सिन्धुमनु
हीशवीक्षितः(XI) ॥५१॥
ह्रदतः समुत्थितवतस्ततो हरेः पितरौ बलो व्रजजनास्तथाऽपरे ।
उपगूहनोत्तरमुदारया मुदा सिषिचुः शिरो नयनवारिभिस्तदा ॥५२॥

---

२६। न ववर्त (पा)। स मञ्जुभाषिणीर्नागपत्नीरन्वकम्पतेत्यन्वयः ।

२७। दन्दशूकता सर्पता सर्पयोनिरिति यावत् 'दन्दशूको विलेशय' इति सर्पपर्यायेऽमरः । अथवेति यथा विष्णुपुराणादौ । प्रस्तुते 'धर्मो ह्ययं दाशरथे निजो न' इति भट्टिकाव्यमनुसृत्य वा स्वशीलख्यापनम् ।

२८। तच्छिरोऽपिधेहि आच्छादय स्वकीयचरणयुगच्छाययेति भावः ।

२९। त्वदनुगास्तव परिकरैरपि इतो ह्रदाज्जलधिरीयतां तत्र गम्यताम् ।

३०। संवृतः परिवृत इत्यर्थः । हीति निपातः पादपूरणे ।

स पशून् शिशून् विषविषङ्ग (३१)मोहितान् निजवीक्षणामृतबलेन बोधितान्।
उपगुह्य सर्वसुरसिद्धपूजितः स्वजनैः सह व्रजमयात् सभाजितः ॥५३॥
स कलिन्दशैलतनयामहाह्रदं परिशोध्य नित्यमतनोद् व्रजे मुदम्।
उपगीयमानमहिमा जगज्जनै-र्विदधद्धरासुरहितं(३२)शनैः शनैः(XII) ॥५४॥
संसारसिन्धुगतदेहह्रदे प्रविष्टं शश्वत् करालकलिकालभुजङ्गदष्टम्।
यस्तारयेत् स्मृतिगतो जगदेकसारश्चित्रं न कालियह्रदात् स यदुत्ततार ॥५५॥
नारायणेन विहितेऽमितविक्रमेण तस्मिन् ह्रदे परमरम्यतमे क्रमेण।
गोपीजनोऽपि स(३३) चकारतरां विलासं(41b)यन्नाहरोह हृदयेऽपि पुराऽभिलाषम् ॥
यस्मिन् करालगरलार्पितदर्पसर्प-भीत्या कदाऽपि बलवानपि नोत्ससर्प।
तत्रापि कालियह्रदे गहने विशाले गोपात्मजा विजह्रिरे वनकेलिकाले ॥५७॥
सस्त्रीकुमारशिशुगोपकुलं तदेवं संश्रित्य [नित्य]मिह यं रमते स्म देवम्।
नानाविधेषु गहनेषु स तदा तमेव प्रीत्या भजामि शरणं मम वासुदेव ॥५८॥
स्वचरणकमलद्वयानुषक्ताद्-ह्रदमपतापमसौ चकार वीर्यात्।
विषमविषविषङ्गं दोषमोषान्मम हृदयं सदयं तथैव कुर्यात्(३४) ॥५९॥

इति **हरिचरिता**ख्ये नव्यसत्काव्यमुख्ये
प्रसरदमृतधारे वर्णितेशावतारे।
कृतकलुषनिरासे तुष्टबालाविलासे
प्रथितगुणविशेषः **सप्तमः सर्ग** एष ॥*॥

---

३१। विषङ्गो विशेषेण सङ्गः सम्पर्कः।

३२। शनैः शनैर्यथावस्तुवृत्तं क्रमेण धरायाः सुराणाञ्च हितं विदधत्। 'सुरसमूहसमीहितसिद्धये धरणिधारणगोद्विजवृद्धय' इति काव्योपक्रम एव भगवदवतारप्रयोजनं निर्दिष्टम्।

३३। स भगवच्छक्तितया प्रसिद्धो गोपीजनः स्त्रीप्रकृतिः स्वभावतोऽबलाऽपि।

३४। पुष्पिताग्रा वृत्तम्। दोषमोषात् पापक्षालनात्। कवेरप्याकूतमत्र। तथा चालंकारकौस्तुभे 'निर्माणकाले श्रीकृष्णगुणलावण्यकेलिषु। चित्तस्याभिनिवेशेन सान्द्रानन्दलयस्तु यः। स एव परमो लाभः स्वादकानां तथैव स' इति।

# हरिचरितम्

## अष्टमः सर्गः

एकदा सगणोऽथागात् कृष्णस्तालवनं घनम् ।
नभस्येकान्तनिर्वर्ये दिने दुरभिलङ्घनम् ॥१॥

परस्परस्पर्धनया खं प्रमा-(42a)तुमिवोन्मुखम् ।
चारुपक्वफलामोदवासिताखिलदिङ्मुखम् ॥२॥ युग्मकम् ॥

उपलब्धतदामोदै-(१)र्वयस्यैर्हृष्टविक्रमौ ।
अवादिषातां तत्रैवं कामपालत्रिविक्रमौ(I) ॥३॥

हे सङ्कर्षण हे कृष्ण जस्यमानवधेनुक(२) ।
वनमेतत् सदाऽध्यास्ते दैत्यो नाम स धेनुकः(II) ॥४॥

ततः कोऽप्यत्र नायाति फलं भोक्तुं सुधोपमम् ।
भवत्प्रभावतोऽस्माभिर्भुज्यतां(III)तन्मनोरमम् ॥५॥

इत्युक्तो लीलया कृष्णः करकम्पेन तालतः ।
फलानि पातयामास बलश्चातिविशालतः(३) ॥६॥

तालानां पततां शब्दं श्रुत्वाऽऽयाद्दैत्यगर्दभः ।
क्रोधात्(IV) काशब्द-(४)मत्युच्चैः कुर्वन् द्विरदसन्निभः ॥७॥

---

१। उपलब्धोऽनुभूतस्तदामोदस्तस्य तालफलस्य सुगन्धस्तेन वासितं दिङ्मुखं यस्य तादृशं खमाकाशम्। आमोदो गन्धहर्षयोरिति कोषः।

२। जस्या रक्षणीया मानवा धेनवश्च येनेति समासन्तः शैषिकः कप्। 'जसि रक्षणे' इति धातुपाठः। जष्यमानव (पा)। सम्बुद्धावुभयोः प्रत्येकं विशेषणम्।

३। विशालतस्तालतो विशालात्तालात्। यमकानुप्रासानुरोधादत्र प्रायो विशेषण-पदादपि प्रत्यययोगः।

४। 'का' इत्यव्यक्ताकारशब्दं यद्वा कुत्सितं विकटशब्दम्।

ततश्च पश्चिमपद-(५)द्वयमुन्नम्य शत्रुवत् ।
उदश्चितजवः शीघ्रं(V) बलभद्रमदुद्रुवत् ॥८॥
युगपत्तत्पदयुगं बलदेवस्त्वविभ्रमः ।
गृहीत्वा लीलयाऽदभ्रमुच्चैः स तमविभ्रमत् ॥९॥
गतासुं भ्रामणे-(12b)णैव तृणराजस्य(६) मूर्धनि(VI) ।
क्षिप्रमक्षिपदक्षीणः प्रोद्भवद्भैरवध्वनि ॥१०॥
हतस्य तस्य सुहृदो ध्वनन्तो बहुधा क्रुधा ।
बलं जिघांसया जग्मुरुरुपादरुहायुधाः(७) ॥११॥
गृहीतपश्चिमाङ्घ्रींस्तान् ततः प्रखररंहसः ।
मेघसंघवदुद्घोषांस्तालाग्रे प्रजिघाय सः ॥१२॥
नदन्तो गर्दभवपुर्धारिणः शतशोऽपरे ।
दैत्या दैत्यारिणा तत्र तालाग्रेषु प्रजघ्निरे ॥१३॥
वज्राग्रनिष्ठुरैर्दैत्यगदाभारजवैर्हता ।
जर्जरा तृणराजानां राजिरासीत् भुवं गता ॥१४॥
धरण्यां तत्र तालानां पातितानां समन्ततः(८) ।
रसं बुबुधुराभीराः सुधा इव समन्ततः ॥१५॥
चचार कानने तत्र गोकुलञ्च निराकुलम्(VII) ।
पुष्पवृष्टिहरिस्तोत्रैः सुराणां वर्त्म(९)संकुलम् ॥१६॥
ततो बलाच्युताभीरकुमाराः प्रययुः सह ।
चारयन्तो वने वत्सान् यत्र भाण्डीरभूरुहः ॥१७॥
तत्र लोकप्रसिद्धाभिः(13a) क्रीडाभिरितरेतरम् ।
रेमिरे चक्रिरेऽथैते हरिणाक्रीडनं परम्(VI) ॥१८॥

---

५। पश्चिमं पश्चाद्वर्त्ति पदद्वयम् ।

६। तृणराजस्य तालस्य ।

७। पादरुहाश्चरणनखाः ।

८। समं युगपत् धरण्यां पातितानां तालानां रसं समन्ततः चतुर्दिक्षु वर्त्तमाना आभीरा बुबुधुर्ज्ञातवन्तः आस्वादयामासुरिति यावत् ।

९। पुष्पवृष्ट्या हरिस्तोत्रैश्चेति द्वन्द्वः । सुराणां वर्त्म नभः ।

द्वौ द्वौ प्रक्रीड़िताावास्तां यस्तत्र स्म विजीयते ।
आभाण्डीरद्रुमन्तेन जैत्रः प्रष्ठस्य(१०)द्रियुते(?) ॥१६॥
मायामायादथालम्ब्य प्रलम्बो नाम दानवः ।
गोपपुत्रवपुर्धृत्वा(११) नित्यं निहतमानवः(IX) ॥२०॥
असहिष्णुरसौ कृष्णमविषह्यममन्यत ।
बलभद्रं तदेयेष जिघांसुर्नेतुमन्यतः ॥२१॥
श्रीदाम्ना पुण्डरीकाक्षः प्रलम्बेन समं बलः ।
युयुधेऽन्यैर्वयस्यैस्त्व-परे(१२) युयुधिरे किल ॥२२॥
गोविन्दबलपक्षीयैः कुमारैर्जिग्यिरे परे ।
मर्यादावृक्षपर्यन्तं(१३) तैर्जेतारः समूहिरे ॥२३॥
आरूढं बलमादाय प्रलम्बोऽगादरुन्तुदः ।
दर्शितात्मवपुर्व्योम्नि चन्द्रबिम्बमिवाम्बुदः ॥२४॥
रौद्रः शकटचक्राक्षो दग्धक्षितिधरोपमः ।
भूषणैर्भूषितो [वि]ष्णुर्भीमः साक्षात् यथा यमः ॥२५॥
रामोऽथ पुण्डरीकाक्षमाचचक्षे (XI)हरिह्रिये(१४) ।
किं कर्म कुर्मः(43b)सुष्ठिह यत्नेनैवापसरन् ह्रिये ॥२६॥

---

१०। 'हरिणाक्रीड़नकं नाम बालक्रीड़नकं ततः। प्रक्रीड़ितास्तु ते सर्वे द्वौ द्वा'वित्यादि हरिवंशे। प्रक्रीतिवास्तायन्त यमेति मूलपुस्तकपाठः। जैत्रो जयशीलः। प्रष्ठोऽग्रगामी। आभाण्डीरेति भाण्डीरद्रुममवधीकृत्य।

११। गोपपुत्रेति—तदाकृतिः प्रलम्बः।

१२। 'कृष्णः श्रीदामसहितः पुप्लुवे गोपसूनुने'त्यादि हरिवंशे। अपरे प्रलम्बानुचरा अन्यैर्वयस्यैः श्रीकृष्णस्येति प्रकरणात्। स्त्व-परे इति नातिमनोज्ञो यतिच्छेदः।

१३। 'मर्यादावृक्षे'ति 'आरूढ़'मिति च—'ते वाहयन्तस्त्वन्योन्यं संहर्षात् सहसा द्रुताः। भाण्डीरस्कन्धमुद्दिश्य मर्यादां पुनरागमन्निति हरिवंशवृत्तान्तात्।

१४। हरिह्रिये श्रीकृष्णस्य लज्जायै। भगवद्भावभावितः श्रीकृष्णो लघुना बलदेववचनेन व्रीड़ितोऽभवत्। अहं दैत्येन यत्नैनैवापसरन् ह्रिये। 'ह्रियेऽहं कृष्ण दैत्येने'ति हरिवंशे। हरिक्रिये(पा)। सुष्ठिति यत्नेनेति च अपसरन्निति क्रियाया विशेषणम्।

तमाचष्ट हरिः स्पष्टमात्मा संस्मर्यतां त्वया ।
धरण्यामवतीर्णोऽसि (XII)प्रकृत्योदीर्णसत्वया(१५) ॥२७॥
अहं हि त्वं त्वमेवाहमावामेव चराचरम् ।
सर्वमेतदविद्याया(१६) भिन्नं भाति परस्परम् ।२८॥
आत्मन्यवेक्ष्य तद्विश्वं शाश्वतञ्चैश्वरं बलम् ।
प्रसह्य जह्यमुं दैत्यं वज्रीवोजस्विनं(१७) घनम्(XIII) ॥२९॥
इत्याकर्ण्य बलस्तूर्णमभवद् गिरिवद्गुरुः ।
आसीत् पीड़ा प्रलम्बस्य प्रतिरूढ़गतावुरुः (१८) ॥३०॥
क्रुद्धेनाथ बलेनासौ मुष्टिनाऽघानि मूर्धनि ।
वज्रेणेवाचलः शीर्णः(XIV)खात् पपातातुलध्वनि ॥३१॥
अमरा नाम रामस्य बलदेवेति चक्रिरे ।
तत्कर्मणा परिष्वज्य वयस्यास्तस्य रेमिरे ॥३२॥
हरिणा हरिणाङ्केन वत्सनक्षत्रमण्डलम् ।
बलेर्विष्णुपदेऽथात्र(१९)सनाथं व्यचरत् सुखम् ॥३३॥
फलपुष्पभरेणातिनमितानमितद्रुमान् ।
आश्रित्य श्रीधरो रेमे रामेण सखिभिः(44a) सह ॥३४॥
कुसुमानि समानीय सुरभीण्यतिभक्तिभाक् ।
केशवे केशवेशेऽस्य(२०) कश्चिद् गोपसुतो दधे ॥३५॥

---

१५। उदीर्णसत्त्वया विशुद्धसत्त्वोर्जितया ।

१६। अविद्याया हेतोरिति शेषः ।

१७। वज्रीवेति मूलस्थः साभिप्रायः पाठः । वज्री इन्द्रो यथा बलवन्तं घनरूपं वृत्रं हन्तीति वैदिकसंहितायां श्रूयते तद्वत् । हरिवंशेऽपि "मुष्टिना वज्रकल्पेन मूर्ध्नि चैनं समाहनदिति" "जगत्यां विप्रकीर्णस्य तस्य रूपमभूत्तदा । प्रलम्बस्याम्बरस्थस्य मेघस्येव विदीर्यत" इति । भागवतपुराणे 'सुराधिपो गिरिमिव वज्ररंहसे'ति च प्रलम्बवधविवरणम् ।

१८। प्रतिरूढ़गतौ गतिप्रतिबन्धे बद्धावस्थत्वात् गतौ नियन्त्रितायाम् ।

१९। हरिणा श्यामवर्णेन वत्सैरगण्यैर्युतं सनाथं गोष्ठं हरिणाङ्केन मलिनेन चन्द्रेण नक्षत्रैर्भूषितमाकाशमिव । बलेर्विष्णुपदमाकाशं पृथ्वी च यथायथम् ।

२०। केशवे श्रीकृष्ण आधारे अस्य श्रीकृष्णस्य केशवेशे 'निमित्तात् कर्मयोगे' इति सप्तमी ।

सत्पुष्पैः स्वयमुद्ग्रथ्य स्रजमाजानुलम्बिनीम् ।
वनमालिगले कश्चित् सुकृती सुकृती(२१) दधौ ॥३६॥

परमाप(२२) रमानाथः स मुदं समुदञ्चिताम् ।
वृन्दावनश्रियं दीप्तां पश्यन् सर्वर्तुशोभिताम् ॥३७॥

सुमनःसु मनस्तुष्टिं(२३) स्थिरामादधतं हरिः ।
सुरभिं सुरभिन्नानामपि वीक्ष्य मुदं ययौ ॥३८॥

सुरसा सुरसारस्य जिष्णोर्विष्णुर्यथा भवेत् ।
तथाऽतनोच्छ्रियं पुष्पैः स तपः(२४) सतपःसमः ॥३९॥

मल्ली वल्लीकुसुमिता हसिताऽऽहसितातपतः (२५) ।
शुचिना शुचिना प्रावृट् संगता परभाविनी ॥४०॥

केकिनामभवद् वीक्ष्य मुदिरं मुदिरम्मदः(२६) ।
प्रीतिं प्रियावतां चारुरतनोरतनोत् प्रियः ॥४१॥

---

२१। सुकृती पुण्यवान् सुकृती शोभनमालारचनकुशलः ।

२२। परं केवलमित्यर्थे निपातो वाक्यालङ्कारे वा। एतेषु षोड़शसु श्लोकेषु (३०-४८) आचार्यदण्डिकृतयमकविभागभिदा यथासम्भवं यथाक्रमं निदर्शिताः ।

२३। सुरभिन्नानां मानवानामपि सुमनःसु पुष्पेषु स्थिरां मनस्तुष्टिमादधतं सुरभिं वसन्तं वीक्ष्येत्यन्वयः। शिशुपालवधे षष्ठे सर्गे इवात्र वसन्तादिक्रमेण ऋतुवर्णनं प्रस्तौति कविः ।

२४। स तपः ग्रीष्मः सतपोभिस्तपस्विभिः समः ग्रीष्मोऽपि पुष्पसमृद्ध्या तपोबलं बभारेति प्रौढ़िः ।

२५। आहसितातपतः ईषत् प्रकाशयुक्तादातपात् कारणात् मल्लीवल्ली मल्लिकालता हसिता विकाशं गता कर्तरि निष्ठा ।

२६। इरम्मदो मेघज्योतिः 'मेघज्योतिरिरम्मद' इत्यमरः। मेघालोक इति यावत्। मुदिरं मेघं वीक्ष्य स्थितानां केकिनां मयूराणाम्। अतनोः प्रियः कामोद्दीपकः 'मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः' इत्यर्थापत्त्या प्रियावतां प्रीतिर्दयितया संयुक्तानामानन्दमतनोत्। इत ऊर्ध्वं दुरूहयमकचित्रकाव्यमयानां श्लोकानां व्याख्यानं (घ) परिशिष्टे द्रष्टव्यम् ।

कृष्णमेघोदयं दृष्ट्वा हृष्टास्तत्र शिखण्डिनः ।
सहसा सहसाऽऽरावं चक्रिरे चक्रिरेचकम्(२७) ॥४२॥
प्रमदाः प्रमदारक्ता(44b) रसिता रसिता वने ।
गरुतोऽगरुतो ग्रीवाः केकिनोऽनर्तयन्नलम् ॥४३॥
नयनानयनायालं नाभवन् नाभवन्नतिम् ।
उत्फुल्लां(२८)व्रततिं पश्यन् भ्रमरभ्रमरङ्गिणीम्(२९) ॥४४॥
केशरान् केशरान् पुष्पधन्वनो नीपपुष्पगान् ।
पथिकः पथि कालेऽस्मिन् बिन्दन् बिन्दन्न नन्दितः(३०) ॥४५॥
कृष्णस्यासन्नलं कुन्दाः प्रियकाः प्रियकारिणः ।
सौरभैः सौरभैवाभून्मल्लिका मल्लिकाऽनुभैः ॥४६॥
कलहं कलहंसानां मधुरं मधुरङ्गिभिः ।
[सारसे सा-]रसे भृङ्गैरुचितो रुचितोऽशृणोत् ॥४७॥
दामोदरपदस्पर्शादामोदरससंयुतैः ।
चारुपुष्पफलाभीरकुमारैस्तद्वनं बभौ ॥४८॥
जगदेकगतिः कृष्णो हलिना केलिशालिना ।
जगदे कलितानन्दो वृन्दावननिरीक्षणात् ॥४९॥
मुकुन्दानिमिषैर्बाणकुसुमैस्त्वां निरीक्षते ।
वृन्दावनं मुदा सान्द्रमुकुलानि स्मितं दधत् ॥५०॥

---

२७। चक्रिणो भगवतः श्रीकृष्णस्य पक्षे रेचकमानन्दसम्पर्कदमुपादेयम्। रिच वियोजन-सम्पर्चनयोरिति धातुपाठः ।

२८। 'उत्फुन्दो व्रतती'मिति मातृकायां पाठः ।

२९। भ्रमरस्य भ्रमेण भ्रमणेनेतस्ततः सञ्चलनेन रङ्गिणीं कौतुकवतीमित्यचेतनलता-वर्णने कविप्रौढ़िः ।

३०। विम्बन्दविन्दु नन्द ताः इति दुष्टः पाठो मातृकायाम्। विन्दन् विन्दन् पुनः पुनर्जानन् न नन्दितः आनन्दं नालभत अतितरां खिन्न आसीदिति यावत्। विन्दन् विन्दन्निति वीप्सायां द्विरुक्तिः। यद्वा त्र्यक्षरयमकनिर्बन्धे तु पथिकाः पथि कालेऽथिन विन्दं विन्दं न नन्दिताः। विन्दं विन्दमिति णमुलार्थकोऽयं शप्रत्ययनिष्पन्नो निपातः ।

निर्जितं कमलं पश्य भवदानन-(45a)शोभया।
भवदानतिलज्जाया भृङ्गावलिभरच्छलात् ॥৫১॥
पुष्पव्यूहैर्हसन्तोऽमी नगा यन्ति मदं मुहुः।
त्वां पश्यन्तोऽलिकाकल्या न गायन्ति नभोलयाः(৩১) ॥৫২॥
कृष्ण त्वां प्रभुमासाद्य निर्जरा इव निर्भयाः।
मुदा रमन्त आकाममुदारमनसोऽर्भकाः ॥৫৩॥
सरसीभूतमखिलं(৩২) सरसीरुहलोचन।
सरसीह वने वत्सांश्चारयन् परमार यत् ॥৫৪॥
कलया मोहितमिदं भुवनं भवताऽनया।
कलयानो बुधः कश्चित् कलयाऽऽत्मा चरिष्यति(৩৩) ॥৫৫॥
नवकादम्बिनीमध्ये नवका दर्शयन्ति नः।
दुर्लक्ष्या मौक्तिकावल्या न वका दक्षिणश्रियम् [৩৪] ॥৫৬॥
तारैः शरदि खे लक्ष्मीर्विहायसमलंकृतम्।
विहाय समयाद् भूमा विहायसः सुरस्तवः(৩৫) ॥৫৭॥

---

৩১। 'न गायन्ति नाभशयः' इति मा पाठः।

৩২। सरसीभूतं नीरसमपि सरसं जातमखिलं वनमिति शेषः। यत् परमत्यर्थमार बभ्रामेति चतुर्थचरणे योजना।

৩৩। कलयाऽणुरूपेणात्मनात्मा जीवः कलयानो निरीक्ष्यमाणः कश्चिदनिर्वचनीयोऽल्प-संख्यको वा पण्डितश्चरिष्यति संसारे व्यवहरिष्यति।

৩৪। 'न वका दक्षिणीस्त्रिय'मितीव माः पाठः।

৩৫। 'भूमा विहाय संसुरस्तवः' इति मा. पाठः। अथान्तरिक्षेश्रूयमाणः भूमा भूयान् बहुलं विहायसः विहगादिव सुरस्तवो देवादिकृता स्तुतिर्विहायसमाकाशं विहाय आकाशाद्बहिर्भूत्वा समयात् प्राप्तः पृथिवीमिति शेषः। यद्वा समयात् कालमहात्म्येन इह भूमौ आय आगत 'कृदभिहितो भावो द्रव्यवत् प्रकाशते' इति न्यायात्। तदा आयः स सुरस्तव इति च्छेदः। लक्ष्मीरपि तारैः मौक्तिक-सदृशैर्नक्षत्रैरल'ङ्कृतंविहायसं विहाय समयात् प्राप्तः पृथिवीमिति शेषः। 'मुक्ताः-शुद्धौ च तारः स्यात्' 'शोभासम्पत्ति पद्मासु लक्ष्मीः श्रीरपि चेष्यते।' 'विहायाः शकुनौ पुंसि गगने पुंनपुंसक'मिति च।

महिकारश्मिवत् केदमहिकायमहाभुज(३६)।
महि काननमुद्वीक्ष्य महिका नोऽति रोचते ॥५८॥
वातायूनां गतिं जेतुं वातायूनां(३७)किलाक्षमा।
मयूरावलि-(45b)रुत्क्रान्तमयू(३८) रावमिहाजहात् ॥५९॥
मानवानां तदीयानामुदाराणामिहाण्वपि।
मानवानां हरे दुःखमुदाराणां कदाऽपि भूत् ॥६०॥
कादम्बिन्यम्बरे धात्रा सरोहितवराऽर्पिता।
सरो हितमिहारम्ये कादम्बिन्यस्तमद्भुतम् ॥६१॥
कैरवैः कैरवैरारि कै रवैरा वृतं वनम्।
सारसारवहीनं वा सारसारस्यमीक्ष्यते ॥६२॥
सरसः सरसः कृष्ण मधुरो मधुरो हितम्।
मधुरो मधुरोल्लासि [सरसः सर] सर्वतः ॥६३॥
नागानागामिनो ज्ञात्वा नागा नागान्नि[रास]यन्।
नागा नागारसदृशा नागा नागाद्वेक्ष्यताम् ॥६४॥
संसारसार साभासा प्रभासार[स]साध्वसा।
रसाभ्यासादिसाध्वासा या सायासा रसाद्दसा(३९) ॥६५॥

षोड़शदलकमलम्(४०)

महीमहो महोमञ्जुममूमतिमहामहे।
मनो मतिमतां मङ्क्षु मग्नमत्र महामहे ॥६६॥ तथैव

---

३६। 'हेमहिकाय' इति द्वितीयचरणे मा. लि. पाठः। अदाकायेन मेगणाजलरसर्प-कायप्रमाणेन तुल्यल्यौ महान्तौ भुजौ यस्येति।

३७। वातायूनां वातं प्रति धावतां वातायूनां मृगाणाम्। 'मृगाः कुरङ्गवातायु-हरिणाजिनयोनय' इत्यमरः। एवं 'कदम्बकं वातमजं मृगाणा'मिति भट्टौ।

३८। मयुशब्दः किन्नरपर्यायोऽमरेण पठितः। उत्क्रान्ता निर्जिता मयवः किन्नरा यया तादृशी मयूरावलिः श्रेणिबद्धा केकिसंहतिः।

३९। इत आरभ्य मातृकायाः श्लोकाङ्कसंख्यायां भ्रान्तिरासर्गपरिसमाप्तेः। अनुलिप्यामपि सा भ्रान्तिरनुसृता।

४०। षोड़शदलमयकमलाकृतिः काव्यबन्धोऽयं श्लोकः। एवमुक्तरत्राष्टकमलादिपदमपि नेयम्। केषामप्येषां श्लोकानां चित्रं 'ङ' परिशिष्टे द्रष्टव्यम्।

विष्णो जिष्णो विनोदे नो(46a) विधिरेधि विभो प्रभो(४१)।
विपिनेऽपि विरूढोरुविद्या विद्याविनायिना ॥६७॥ अष्टदलम्
सत्ये नित्ये सदामोदासने ज्ञाने सते[हिते]।
सदामोदासने स्थाने सह वेह समे रमे ॥६८॥ तथैव
केशवेह त्वया नाके केनापामित्रमालिके(?)।
केलिमातन्वतेऽभीके के भीते विनिवेशके ॥६९॥ अष्टदलान्तरम्
काननेऽस्मिञ्छुभाशोका का शोभा नातिशायिका।
कायिशान्तिकृदालोका कालोकादात्मने न का ॥७०॥ तथैव
विमलानि जलानीह मध्ये नार्वाम्भशावनी (?)।
लाना रुच्या महाशालाऽनिर्वाच्या विश्रमम्भज ॥७१॥ अर्धभ्रमः(४२)
परमानामयकरो रमानाथाङ्ग पालक।
मानाहीन सदाऽपायनाथानन्दा हसङ्गम(४३) ॥७२॥ तथैव।
मया सार रसायाम यामताङ्गङ्गता मया।
सातायाभ भयातासा रङ्गभङ्गङ्गभङ्गर ॥७३॥ सर्वतोभद्रम्(४४)
महामोददमोहाम हारिमोत्तत्त-(46b)मोऽरिहा।
मोमोहोममहो मोमो दत्तमस्त्वस्त्वमत्तद ॥७४॥ तथैव
कानने जनने चोरु रुचोऽनेन जनेन का।
केलिमातनुते रामा मारातेनुत मालिके ॥७५॥ श्लोकार्धगतप्रत्यागतम्(४५)

---

४१। नोऽस्माकं विनोदे चित्तविनोदने विधिर्विधाता त्वमेधि भव।

४२। अत्र सर्वतोभद्रवत् सर्वपादभ्रमणाभावात् पादार्धानामेव भ्रमणादर्धभ्रम इति बन्धस्य तथाविधाऽऽख्या।

४३। मानाहीन सतापाय नाथानन्दाऽसङ्गमेति मा. लि. पाठः। श्लोकेष्वेषु मा पाठः प्रायोऽशुद्धिबहुलो दुरूहश्च निर्दिष्टसंज्ञबन्धकाव्यभेदपूर्त्तिव्याजेन यथामति यथासम्भवं शोधितः। एषां व्याख्या परिशिष्टे द्रष्टव्या।

४४। तल्लक्षणं काव्यादर्शे 'तदिष्टं सर्वतोभद्रं भ्रमणं यदि सर्वतः।' भ्रमणमिति निर्देशसार्थक्यमुभयत्रापि चित्रतो व्यक्तीभविष्यति।

४५। अत्र प्रतिश्लोकार्धं प्रतिलोमपाठेनापि स एवाकार इति श्लोकार्धस्य गतप्रत्यागततया सार्थकं नामकरणम्।

सारसारवलीलासा सालालीवरसारसा।
सरसी सरदायाने नेयादारससीरस ॥७६॥ तथैव
हासभासमसावाहा पद्मापल्लसिताऽमिता।
तामितासिल्लपद्माप-हावासामसभासहा ॥७७॥

श्लोकप्रतिलोमानुलोमकम् (४६)

सालतालवनेनेमा रसा गोपसुखावहे।
हेवखासु पगोसार मानेनेव लतालसा ॥७८॥ तथैव।
वाङ्मना(?)मन्तरङ्गेन कालोदारवशाद्गत।
नीपद्रीप्ररसालालीरमारासप्रसङ्गया ॥७९॥
याऽङ्ग सप्रसरा मारलीला सारप्रदीपनी।
तद्वशा वरदालोका नङ्गेरन्त मनाङ्मवा ॥८०॥

श्लोकद्वयगतप्रत्यागतम् (४७)

कानने घनभावेन सौराभा वसतीह न।
तापि-(47a)नी नजरेद्वस्यादामोदासवभावदे ॥८१॥
देव भाव सदामोदा स्याद्वरे जननी पिता।
न हती सवभारा सौ नवे भानघने न का ॥८२॥ तथैव
घनभाऽनघ नारीना सातं सातनते नुत।
दयया मदवत्राव ते यते यजतां जय ॥८३॥

( प्रातिलोम्येन पाठे स एवार्थः )

यजतां जयते यते वत्रा वद मयायद।
तनुते नतसातंसा नारीना घन भानघ ॥८४॥

श्लोकप्रतिलोमयमकम्(४८)

---

४६। अत्र समग्रश्लोकस्य प्रतिलोमपाठेनानुलोमपाठो मिलतीति तथैव संज्ञा। यमनात् यमकमित्यपि।

४७। पश्चात्तनस्य श्लोकस्य प्रतिलोमपाठे पूर्वः श्लोकः पूर्वश्लोकस्य प्रतिलोमपाठे पश्चात्तनः श्लोक इति श्लोकद्वयस्य गतप्रत्यागताभ्यामियं संज्ञा।

४८। श्लोकद्वयेगतप्रत्यागतस्यैव संज्ञाऽन्तरम्।

जय कृष्ण जगद्बीज[ज]लजाक्ष जनार्दन।
हर्म······त्वनेवीक्ष्य रञ्जन(?) ॥८५॥ चक्रम् (४९)

मधुशत्रो मधुकरा मत्ता मधुमदाविमे।
गायन्तोऽत्रोत्सवे धीराः मनः साधु हरन्ति मे(५०) ॥८६॥ तथैव

कालिन्दीलोलकल्लोलकेलिक्रान्तेन वायुना।
मालतीमल्लिकामोदहारिणेयं विमोहिका ॥८७॥

कामनीयकमप्यस्याः कामिनीमानसन्दि का।
कामस्यानन्दमाधत्ते कृष्णामन्दवनस्थली(५१) ॥८८॥ खड्गः(५२)

सरसा सुरसारस्य(47b) तरसाऽऽमोदिसारसा।
सारसादि न सा तुल्या सारसा सुरसा तुला ॥८९॥ मुरजः(५३)

---

४९। 'तदन्यदपी'ति वाक्येन चक्रारनेमिपद्मदलादावनियम उक्तो भवतीति तट्टीकायां नमिसाधुः। अत्र काव्ये तथैवेति निर्देश एतदाकृतक एवेति ज्ञेयम्। यदाहुः—पुरः पुरो लिखेत् पादानत्र त्रीन् षड़रीकृतान्। तुर्यन्तु भ्रामयेन्नेमौ विज्ञेयश्चक्रसंविधिः,। अरनेमिपदे चक्रसन्धानं यथायथं सूचयतः। प्रक्रिया तु परिशिष्टप्रदर्शिताच्चित्रात् स्फुटी भविष्यति। एवमितरेष्वपि मुरजखड्गादिबन्धेषु। अत्ररुद्रटः—यन्नाम नाम यस्य यत्स्यात्तदाकृतिर्लक्षणं मतं तस्य। तल्लक्षयमेव दृष्टाऽवधार्यमखिलं तदन्यदपि॥

५०। हे मधुसूदन! इमे वसन्तकालेनोद्दीपनेन मत्ता मधुकरा इहोत्सवे ऋतूत्सवे गुञ्जन्तो मे मनो हरन्ति। ते खलु उत्सवे गायन्तो गायका इवेत्युपमा व्यङ्ग्या।

५१। अस्या यमुनायाः कामनीयकं सौन्दर्यं कामिनीमानसन्दि रमणीमानखण्डनम्। दो खण्डने धातुः ततो णिनिः। हे कृष्ण का कीदृशी अमन्दवनस्थली मञ्जुवनभूमिः कामस्यानन्दं मदनजनितं चमत्कारमाधत्ते इति प्रश्नः।

५२। श्लोकयुग्मेन सन्दानितेन खड्गः फलमुष्टिविभागयुतः सम्पद्यते। तृतीयचरणेऽस्या इति सर्वनामपरामर्शो नातिमनोरमः। आद्यः श्लोको फलरूपोपत्ते मुष्टिरूपः न्यासविधिस्तु परिशिष्टि प्रदर्शिता चित्राद्बोध्यः।

कमलावह नाकस्य विमला चारुलाकभा।
भाकला रुचिलाभस्य सकला वहलाभ सा ॥६०॥ तथैव
नारायणातिथीनेते(५४)सन्तः काननशाखिनः।
छायाऽऽदिना सदाऽर्चन्ति तेन नः सन्ति दासकाः।६१॥

निरोष्ठो गूढ़चतुर्थकः(५५)

भूरिपत्रा विटपिनः सुमनःफलशालिनः।
परिषत्राळ्यटयनः सुमनःफलशाखिनः ॥६२॥ गोमूत्रिका(५६)
लसाल साललीलात्त लोलालालीरलं रलः।
सरसे सारसे सौरैरुस्रैरुरुरसीसरत् ॥६३॥ द्व्यक्षरपादः(५७)
लकुचोपानपनसरसालकदलीफलैः।
रसवद्भिरलं सेव्यं नव्यं भव्यैरिदं वनम्(५८) ॥६४॥
नवपल्लववन्नाना(?)नावानानि विनावनम्।
नवीनानि वनानीव नानावीनि विनावनि ॥६५॥ द्व्यक्षरः

---

५३। मुरजो वाद्यविशेषस्तदाकृतिर्बन्धो मुरजपदेन सूच्यते। प्रथमपादस्याद्यवर्णेन द्वितीयस्य द्वितीयवर्णेन तृतीयस्य तृतीयवर्णेन चतुर्थस्य चतुर्थवर्णेन एवं प्रतिलोमक्रमेण चतुर्थस्य पञ्चमवर्णेन तृतीयस्य षष्ठवर्णेन द्वितीयस्य सप्तमवर्णेन प्रथमस्याष्टमवर्णेन प्रथमपादो भवति। एवमपरत्र।

५४। हे नारायण एते सन्तः शोभनाः काननशाखिनोऽरण्यवृक्षच्छायाऽऽदिना सदाऽतिथीनर्चन्ति सेवन्ते। तेन नोऽस्माकं दासकाः भृत्यकल्पा भवन्ति।

५५। निरोष्ठ ओष्ठवर्णशून्यः पवर्गवर्णानां श्लोके सर्वत्राविद्यमानत्वात्। गूढ़चतुर्थक इति—तत्रादितः पादत्रये स्थितानां वर्णानामेव चतुर्थपाद उपयोगो नेतरेषाम्।

५६। 'गतिरुच्चावचा यत्र मार्गे मूत्रस्य गोरिव। गोमूत्रिकेति तत्प्राहुर्दुष्करं चित्रवेदिनः ॥' इति तल्लक्षणम्। अयञ्च पादश्लोकार्धसमश्लोकपुरोणत्यभूमे विविधः।

५७। द्वयक्षरपादः—कस्मिंश्चन पादे द्वावेव वर्णौ स्यातां यथा प्रकृतश्लोके प्रथमपादे लसौ द्वितीये लरौ तृतीये सरौ चतुर्थे रसौ। पदान्ते बिन्दुविसर्गव्यजनान्तवर्णैर्न बन्धबाधा।

५८। अत्र श्लोके फलनामानि कानिचनोपलभ्यन्ते। तत्रोपानपदं न स्पष्टम्। पाठो वाऽन्यथा स्यात्।

सतीं साततिं सूते सेताऽसौ सततं(48a) सताम्।
ततस्तासस्तुतस्ते स्तास्तेते तेसता सिताः(?) ॥९६॥ तथैव

लोललालालली लोलो लेलाल्लूलालुलुलुलु।
लुलैलोललीलालेलः लाल्ले लो लेललोललम् ॥९७॥ यकाक्षरः

उदाहरेयुस्तव के पुरो हरे शिरो हरेत्तुङ्गमितार्धमाहरेः।
त्वया हरेणेव वने यथा हरेरिहाहरेरन्वनुगानुदाहरे ॥९८॥
इतीरितोऽसौ हलिना स्वभावतस्तमाह कृष्णः प्रियकृत् स्वभावतः।
सुधां क्षरंश्चन्द्र इव स्वभावतः [सुखेन ताता]भिरमस्व भावतः(५९) ॥९९॥
इहानुगा कीर्त्तिविभावनेऽवनेरजस्रमस्मद्विहितावने वने।
स्थलीयमन्यैः कृतधावने वनेऽत्यलं रमन्तां सति धावने वने ॥१००॥
एषु स्थलेषु सततं शुचिशाद्वलेषु
निःसङ्कुलेषु बहुशो रसवज्जलेषु।
वर्णङ्किलेषुरमरा(६०)अपि चञ्चलेषु
कामाकुलेषु हृदयेषु परेऽभिलेषुः ॥१०१॥
कासारसारसविलासहसारसार
कासारसारसहतर्पित(48b)सारसार।
संसारसारपदमत्र ससारसार-
भासावसा रतिपतिर्नु ससार सारः ॥१०२॥

५९। स्वभावत इति–प्रथमचरणे स्वभावत इति-पदेन स्वकीयभावातिशय्येन द्वितीयचरणे स्वभावतः प्रकृत्येत्यर्थे तृतीयचरणे स्वभावत इति निसर्गनियमितवातावरणादि-कारणात्।

६०। अमरा देवाः किलेति पुराणवार्तायां वर्णं रूपं ईषुराभीक्ष्ण्येनायाचन्तेति इष आभीक्ष्ण्ये इत्यस्य लिटि रूपम्। तीषसहेत्यादिनाऽत्र विकल्पेनानिटत्वम् (पा ७।२।४८)। मथुरामाहात्म्ये देवानां तत्र बहुशः प्रादुर्भावः सूचितः। परे अपरे भक्ता इति कामेनाकुलत्व हृदयेषु वाञ्छापूर्त्यर्थं स्थलान्यभिलेषुः व्रजे वासस्य बहुत्र प्रशस्तत्वात् तीर्थमाहात्म्यात् वैष्णवमते च तस्य नित्यधामत्वात्।

लीलावन्त्यानतिस्था सततरुतरुतसस्थातिनस्त्यावलाली-
नासूभिद्योवनस्था रचितहितचिरस्थानवद्योभिसूना।
सौरादद्धावनद्धा रसवदवसरद्धारवद्धादरासौ
खेलामन्यावलम्ब्यानघ नघनघनम्यालवन्यामलाखे(६१) ॥१०३॥

मुकुन्दवदनेन्दुतः स्मितसितोल्लसच्चन्द्रिकात्
स्नुतानि वचनान्यमून्यथ निपीय [शान्तार्तिकाः](६२)।
वनेचरकुमारका रुचिरमन्नपानन्तदा
समं समभिवाजह्नु-(६३) र्व्रजमयुर्दिनान्ते मुदा ॥१०४॥

तन्व्याऽप्रीयत सा चलातुलगुणाजस्रं वने चक्रिणा-
मभ्याहन्ति च कौतुकानिलमुखी कम्रां स्थली रिङ्गिते।
सद्वारिप्रकरैर्भुवोऽमलतया विस्तारि सातं हिते
तेन ख्याततया महारसभरेणाभूद्व्रते सम्भृते ॥१०५॥

कविकाव्यनामाङ्कं चक्रमिदम्(६४)

इति **हरिचरिता**ख्ये नव्य-(49b)सत्काव्यमुख्ये
प्रसरदमृतधारे वर्णितेशावतारे।
कृतकलुषनिरासे तुष्टबालाविलासे
विरचितबहुचित्रः **सर्ग एषोऽष्टमोऽत्र** ॥

---

६१। अत्र श्लोकपादा वैपरीत्यक्रमेणापि तादृशा एवेति श्लोकपादेषु गत-प्रत्यागतक्रिया।

६२। शान्ता प्रशमिता आर्तिः पीडा येषां ते शान्तार्तिकाः।

६३। समभिवाजह्नुरिति पदे जह्नुरिति "प्रह्वे" इत्यादि विधानातिदेशेन 'ह्न' स्यापि छन्दःशास्त्रप्रवीणानां मते लघुत्वं समर्थनीयं यथा 'प्राप्य नाभिह्नदमज्जनमाशु' इत्यादि माघपद्ये। समभिवाजह्नुः क्षयामाछरित्यर्थः। तृतीयस्योपसर्गस्या-दावल्लोपः।

६४। कवीनां केषामप्येष वैदग्धीविशेषो यथा माघकाव्ये १९श—सर्गेऽन्तिमश्लोके इहैव शार्दूलविक्रीडितच्छन्दसा रचिते कविकाव्यनामनी युगपत् स्तः। एतच्च कविकाव्यनामाङ्कचक्रभेदस्योदाहरणम्। एवं कप्फिणाभ्युदये सर्गान्ते।

# हरिचरितम्

## नवमः सर्गः

एवंप्रकारैर्बहुभिर्विहारैः सञ्जातहर्षावतिवाह्य वर्षाः ।
दृष्टाऽम्बुजास्यां शरदं सहास्यामास्तां सतृष्णौ बलदेवकृष्णौ ॥१॥

पद्मेषु भृङ्गा मधुपानरङ्गालीलादृशोऽस्या बहु शोभितास्याः(१) ।
ऐक्ष्यन्त ताभ्यां रुचिरस्मिताभ्यामत्युत्सवाभ्यां बलकेशवाभ्याम् ॥२॥

पीनस्तनश्रीरतिचारुमिश्रीभूतेन चक्राङ्कयुतेन(२) सङ्गम् ।
तेनेऽथ हस्तान्तकलाऽभितस्ता रक्तोत्पलेन स्फुटनिर्मलेन ॥३॥

व्यातेनुराशाः सुविकाशिकाशाः शोभाः परस्यातिशयेन तस्याः ।
स्वानेन हंसा वलितप्रशंसाः पीयूषवासाः सरसान् विलासान् ॥४॥

नीलेन कण्ठेन भुजङ्गभोगी मौल्यर्धचन्द्रेण सदेहयोगी(३) ।
निःसारसंसारधिया-(50a)ऽतिशान्ति-(I)मौनी वनेऽस्ति स्म
सहातितान्तिः ॥५॥

त्यक्त्वा जलं सर्वमिहाम्बुवाहा(II)वैलक्ष्यमालक्ष्य सदाऽपगेहाः ।
क्ष्माभृन्नितम्बेषु बभुर्वसन्तः शुद्धामृताकाङ्क्षितयेव सन्तः ॥६॥

---

१। लीलदृशोऽस्याः शरदो रमणीरूपायाः बहुभूषिष्ठं यथा स्यात्तथा शोभितमास्यं वदनं येषांदृशा भृङ्गा इति योजना ।

२। चक्राङ्का हंसाः । 'चक्राङ्का मानसौकस' इत्यमरः । हस्तान्तकला नखरेखा तया अभितस्ता विभूषिता 'तसि भूष अलङ्करणे' इति धातुपाठः ।

३। 'निःसारसंसारधियाऽतिशान्तिम्मोणीव चलन्तिमे महाविभूतेः' मा. पाठः । भुजङ्गभोगी सर्पाशी मयूरः मौनी वने अस्ति स्म आसीत् । एवं 'सरस्वती सस्मितमाह स स्मे'त्यादिश्रीहर्षादिप्रयोगाः सन्ति । वर्षाऽपगमात्तस्य निसर्गव्यापारेषूदासीनता तूष्णीम्भावश्च तृतीयचरणे सूच्यते । महाविभूतैरित्यत्र 'महातितान्तिरिति' पाठः स्यात् । तेन चान्त्यानुप्रासत्वं सुस्थितम् । अतितान्तिरतीव क्लान्त्या सह वर्त्तमानोऽतीव म्लानः । शब्दप्रयोगमहिम्ना नीलकण्ठो भुजङ्गभोगी शिव इवेत्युपमा व्यङ्ग्या ।

प्रापातितापं सफरो रसेषु(III)प्रचीयमानेष्विह सारसेषु।
कालेन मित्रेऽपि तपत्यमित्रे गृहेष्ववात्सुस्तनयादिवत्सु ॥७॥

अम्भांसि(IV)सर्वत्र निरुर्मिवन्ति(४) प्रापुः प्रसादं रभसानुवन्ति।
योगप्रभावेण यथा मनांसि ज्ञातेऽथ विष्णौ सुधियां सुभांसि ॥८॥

राजा द्विजानां(V)परमन्तरीक्षे नक्षत्रवृन्देन समं तमिस्रे।
कृत्येषु शुद्धैर्विबभौ सदाऽऽशा योगीव कुर्वन् विमलप्रकाशाः ॥९॥

योगेन मेघप्रचयैर्निरस्ते तापेऽपनीते विधुना समस्ते।
उत्तारकं निर्मलमत्र सम्यग्व्योम व्यभाच्चित्तमिवातिरम्यम्(५) ॥१०॥

इत्थं शरद्यद्भुतरूपवत्या-मत्यर्थमीशो विहरन् सुमत्या(50b)।
नन्दोपनन्दप्रभृतीनुदार-सम्भारसक्तान् कलयाञ्चकार ॥११॥

अथोत्सवे हेतुमयं बुभुत्सुः पप्रच्छ सर्वेष्वतिभावबत्सु।
हर्षप्रकर्षः कुत एव वृद्धा युष्माकमाचड्ढ्वमिदं ममाद्धा ॥१२॥

नन्दो मुकुन्दं निजगाद मन्द्रं[VI]यक्ष्यामहे कृष्ण वयं(६)महेन्द्रम्।
वर्षाव्यपाये जगदेकदेवं मेघाधिनाथं यजते तमेवम् ॥१३॥

इष्टेन तुष्टेन हितेन मेघा दिष्ट्या सुवृष्टिं [वितरन्त्य]मोघाः।
शस्यैश्च शष्पैश्च ततः प्रभूतैः जीवन्ति लोकाः पशवः प्रभूतैः(६) ॥१४॥

---

४। निरुर्मिवन्ति वर्षाकालप्रबलभञ्झोतोवहताऽभावात् स्तिमितानि। रभसेन वेगेन आनुवन्ति ईषन्नम्राणि। सुभांसि शोभनवृद्धिदीप्तानि।

५। रामायणादिषु निसर्गशोभावर्णने विशेषत ऋतुवर्णने इयमुपमाऽऽश्रया शैली रमणीयात्मतयाऽनुसृता। विष्णुपुराणे (५।६।३९–४२) भागवतपुराणे च (१०।२०।३—२४) वर्णनभङ्गी एतत्संवादिनी। पुराणपाठकवंशीयस्य कवेरियं वैदग्धी समञ्जसैव। प्रकृते तु भागवतपुराणेऽस्मिन्नेव प्रसङ्गे शरद्वर्णनम् (१०।२०।३२—३४) आदर्शतया गृहीतं कविना चतुर्भुजेन।

६। जगत् कर्तृ तमेकदेवं देवश्रेष्ठं यजत इत्यन्वयः।

७। ततः प्रभूतैस्तत्प्रभवैः। प्रभूतैः प्रचुरैः शस्यैः शष्पैश्च लोका जीवन्तीत्यन्वयः।

इत्येतदाकर्ण्य विचार्य कार्यं लोकेषु चिख्यापयिषुः[VI]स्ववीर्यम् ।
कोपाय शक्रस्य [च] चक्रपाणि-र्वाक्यान्यवोचन्मधुराक्षराणि ॥१५॥

नैतद्वचश्चेतसि नश्चकास्ति सम्यग्विचारे भवभा(८) च काऽस्ति ।
कार्यं विचार्य क्रियते यदत्र कल्याण-(९) कृत्तद्वि(50b)तथाऽपरत्र ॥१६॥

तिस्रो हि विद्या(१०) मुनिभिः प्रदिष्टा विप्रास्त्रयीं शिश्रियुरत्र शिष्टाः ।
मूर्धाभिषिक्ता बत दण्डनीतिं वैश्यास्तु वार्तामिति कीर्तयन्ति(११) ॥१७॥

वार्ताऽभिधा तत्र कृषिर्वणिज्या यैः शिश्रिये तैः क्रियतां सुरेज्या ।
तत्रास्महे सम्प्रति गोपगोत्रा-स्तन्नोऽर्चनीयाः सदरण्यगोत्राः(१२) ॥१८॥

ये यत्समालम्बिफलेषु युक्ता-स्तेषां तदर्चैव सदोपयुक्ता ।
यज्ञार्चकानां परतःफलानां[VIII](१३) नास्त्येव कुत्रापि शिवं खलानाम् ॥१९॥

किञ्चैतदेव प्रवदन्ति सन्तः सिंहादिरूपैर्गिरमुच्चरन्तः[IX] ।
स्वीयेषु सानुष्वनुगानुपेतान्(१४) रक्षन्ति निघ्नन्ति च दुर्विनीतान् ॥२०॥

---

८। का भवभा किं संसारभानमस्ति ? संसारस्य मायाकल्पितत्वादविद्यमानतेति दार्शनिकसिद्धान्तरुचिः प्रकटिता ।

९। कल्याणं करोति जनयतीति क्विपि कल्याणकृत् शुभोदर्कम् ।

१०। वैश्यस्य कृषिपाशुपाल्यवणिज्येति विशिष्टो वर्णधर्म इत्यर्थशास्त्रकाराः ।

११। कीर्त्तयन्तीति चतुर्थवर्णान्तेऽन्त्यानुप्रासव्याघातोऽमनोज्ञकल्पः प्रतिभाति । पाठभेदः कल्पनीयः । त्रयी वार्ता दन्तनीतिश्चेति मानवा इति कौटिलीयेऽर्थशास्त्रे ।

१२। गोपगोत्रा गोपवंशजाः । सदरण्यगोत्रा इति शोभनामरण्यभूमिं त्रायन्ति ये पर्वताद्याः । 'गोत्रः शैले । गोत्रं कुलाख्ययो'रिति कोषः ।

१३। परतः श्रेष्ठत्वेनादृतानि अथच परलोके लभ्यानि फलानि येषां तैरिति सकामकर्मणां निन्दा । परत इति सार्वविभक्तिकस्तसिः । 'कामात्मानः स्वर्गपरा' इत्यादिवचःसन्दर्भेण श्रीभगवानिदमाह श्रीमद्भगवद्गीतायाम् ।

१४। सानुष्वनुगान् सानुदेशस्थितान् उपेतान् स्वीयजन्मभूमित्वेनाश्रितान् ।

तन्नो महेन्द्रस्य(१५) महोऽन्तरङ्गः कार्यस्तु गोवर्धनगोत्रयज्ञः(X)।
मेध्यानि मांसाज्यपुरःसराणि वस्तून्युपादत्त सुविस्तराणि ॥२१॥
(51, 52a)(१६) तैर्ब्राह्मणौघः प्रणयेन भोज्यः(XI) संपूज्य शैलाय बलिः प्रयोज्यः।
गावो वृषास्तं परितः प्रयन्तु प्रभूषिता नस्तदतिप्रियन्तु ॥२२॥
एतां गिरं माक्षिकमुद्गिरन्तीं(१७) पीयूषधाराः श्रवणे किरन्तीम्।
आकर्ण्य सानन्दमथाभिनन्द्य नन्दो बभाषे सुरवृन्द[वन्द्यः] ॥२३॥
यद्वत्स सद्वत्सल नोऽभिधत्से(XII)त्वत्प्राति-[कूल्यं] क इहाभिधित्सेत्(१८)।
त्वं नः समस्तार्थविधौ प्रमाणं मन्यामहे त्वां पुरुषं पुराणम् ॥२४॥
प्रारभ्यते माधव शैलयज्ञ-स्तद्वाक्यतस्त्वं हि फलोदयज्ञः(XIII)।
अन्योऽपि यज्ञो भवदाज्ञया हि श्रुत्या प्रवृत्तस्तमिहापि पाहि(१९) ॥२५॥
इत्येवमुक्त्वाऽद्रिमहो यथोक्तः प्रारम्भि नन्देन हरिस्त्वभुङ्क्त।
स्थितोऽद्रिशृङ्गे गिरिरूपधारी बलिं(२०) स तुष्टाव च भूविहारी ॥२६॥

---

१५। अन्तरङ्गः स्वकीयः साधनत्वादतिप्रियो मह उत्सवः। पुरा किलेन्द्रध्वजपूजाऽपि लोकैरनुष्ठिताऽऽसीत्। अत्र गिरियज्ञ इन्द्रप्रीतिनिदानतया स्मृत इत्याचार-परम्परया स्तूयते।

१६। एवमङ्कद्वयी मा. तथा ने. मातृकायाञ्च।

१७। माक्षिकं मधु। गिरं माक्षिकमिति व्यस्तरूपकम्। 'वदामि वामाक्षि परेषु मा क्षिपः स्वमोदशं माक्षिकमाक्षिपद्वच' इति नैषधप्रयोगो व्यतिरेकगर्भस्तुलनीयः।

१८। 'मोभिधद्सतत्त्रोतिङ्क तरुङ्कहाभिधिहुसत्' इति लिपिकरप्रमादजनितो विचित्रः मा. पाठः। प्रातिकूल्यं तल्लिङ्गमप्रीतिकारणं देवताऽऽराधनायोद्युक्तमिहास्मिन् विषये अभिधित्सेत् वक्तुमिच्छेदित्यर्थः। 'त्वप्रत्यातिकूल्यात् क इहाभिधित्सते'ति ने. मा. पाठः। स च सुष्ठु सङ्गमनीयः।

१९। अन्यो यज्ञो वैदिकः श्रुतिबोधितः—श्रुतिश्च भवदाज्ञैवेति सोऽपि प्रवर्त्यत इति भावः।

२०। हरिर्गिरिरूपधारी गोवर्धनरूपाकारधारणेनेति यावत् साक्षात् बलिं यज्ञोपहारानभुङ्क्त गृहीतवान्।

आवष्ट गोपान् गिरिमत्र तुष्टं याचध्वमानम्य वरान् यथेष्टम् ।
तत्रात्मना सार्धमथानतेभ्यः शैलात्मकोऽदत्त वरान् स
(51,52b)(२१) तेभ्यः ॥२७॥

संख्याऽतिगा वः प्रभवन्तु गावः कल्याणवत्साः पयसामिवोत्साः(२२) ।
शान्ताः सुकान्ताः ससुताः सकान्ताः सानन्दसन्धं बहुधा रमध्वम् ॥२८॥
एवं समालप्य तदाऽद्रिलायी सोऽन्तर्दधे यज्ञगुणातिगायी(२३) ।
कृष्णोऽपि गोपैः परमाभिरामः(XIV)सम्भूयमानो(२४)व्रजमाजगाम ॥२९॥
आखण्डलः खण्डितयज्ञ इत्थं क्रोधं वहन्नोपम-(२५)मैतदुत्थम् २६) ।
संवर्तकं नाम गणं(XV)घनाना-मित्याख्यदामुक्तविलङ्घनानाम्(२७) ॥३०॥
मेघा मदाज्ञासमनन्तरं वः कार्योऽयमर्थो न पुनर्विलम्बः ।
संपीड़यध्वं बत नन्दगोपं कृष्णाश्रयात् योऽकृत यज्ञलोपम् ॥३१॥
गावोऽस्य वृत्तिः परमा प्रशस्ता वर्षेण शीघ्रं हत संघशस्ताः(२८) ।
अथागमिष्याम्यहमम्बुवातं प्रत्याददध्वं(२९)त्वरितं प्रयातम् ॥३२॥

---

२१। एवं मा. लिपौ संख्याद्वयनिर्देशः। आत्मना सार्धं भगवानपि गिरिं प्रणत इति ।
२२। 'सानन्दसन्ध'मित्यनुप्रासप्रीत्या वचोविस्तारः। संख्यामतिगच्छन्त्यतिक्रामन्ति ये तेऽसंख्या इति यावत्। पयसामुत्साः प्रस्रवणानि ।
२३। अद्रौ गोवर्धने लीनः। यज्ञगुणाभिगायी बज्ञस्तुतिं प्रकरणादद्रियज्ञप्रशंसामतिगायी तस्या अतितरां कीर्तनशीलः ।
२४। गोपैः सम्भूयमानो गोपैः समवेतः। 'सम्भूयाम्भोधिमभ्येती'तिवत् संपूर्वाद्भवतेर्मेलनमर्थः ।
२५। 'नोपम'मिति उपमा न विद्यमाना यस्य तादृशमनुपमं कोपं वहन्निति योजना ।
२६। एतदुत्थमेतस्मात् यज्ञनिषेधनादुत्थितं जातम् ।
२७। आमुक्तविलङ्घनानामपसृतबाधानाम् ।
२८। सङ्घशः समवेततया प्रयस्ताः। आगमिष्यामि 'अयमहमागत एवे'तिवत् प्रयोगः ।
२९। त्वरितं प्रयातं वेगेन युद्धार्थमिवोद्युक्तमम्बुवातं वर्षा झटिकाश्च प्रत्याददध्वं चालयतेति यावत्। दधतेर्भ्वादिगणीयादात्मनेपदप्रयोगः ।

ते सन्निदिष्टाः शतमन्युना द्या-माच्छा-[ा]दयाञ्चक्रुरनन्यचोद्याः(३०)।
कल्पान्तवत्तत्र दिशः समस्ता ध्वान्तेन पीता रविभा(53a)
निरस्ता(३१) ॥३३॥

विद्युत्कशाऽन्योन्यहतैरनन्तै-रुच्चैः स्तनद्भिस्तदनन्तरन्तैः।
[कल्पान्तकल्पैरिव जोतकोपैः](XVI) प्रावर्षि सन्धर्षितसर्वगोपैः ॥३४॥

तत्राङ्ग मातङ्गमतीव तुङ्गं शक्रोऽधिरुह्याधरिताद्रिशृङ्गम्।
व्यामुह्य संपादनयाऽतिरम्भान्(३२)प्रोत्साहयामास
घनाब्दसंघान्(३३) ॥३५॥

वर्षद्भिरश्रान्तममीभिरैन्द्रै-रेकीकृतक्ष्माधरणीधरेन्द्रैः।
अन्योन्यतोऽत्राप्रतिलब्धवार्त्तै-(३४) र्गोपैर्बभूवे प्रलयेष्विवार्त्तैः ॥३६॥

वातैः प्रवातैः सततं बतोग्रै-रुन्मूलितै[र्मञ्जु]नगैरगाग्रैः।
उर्व्यामदभ्रं जनितातिघोषै-(३५)रत्रालमत्रासि समस्तघोषैः ॥३७॥

भग्नास्थिसक्थित्रिककन्धरोभि(३६)-र्भुवस्तदा पुप्लुविरे
च गोभिः(३७)।

आक्रम्य वत्सानहहापराभिः क्रोड़ेन तस्थेऽतितरां स्थिराभिः(३८)-
(XVII) ॥३८॥

वृष्ट्याऽतिकष्टाद्बहवो विनष्टा वत्सास्तदा येऽपि ततोऽवशिष्टाः।
जाड्याद्बहुप्रार्थितया मुकुन्दं पाहीति ते प्राहुरिवेह मन्दम् ॥३९॥

---

३०। अनन्यचोद्या इन्द्रव्यतिरिक्तेनान्येन केनापि न प्रेरणीयाः।

३१। पीता ग्रस्ता ध्वान्तः कवलितेति यावत् निरस्ता दूरीकृता। पीतेति गौणवृत्तिव्यपाश्रयः प्रयोगः।

३२। अतिरम्भान् अतिमात्रं संरम्भवतः। सम्पादनया स्वमायाशक्त्या।

३३। निविड़ान् मेघसमूहान्। 'घनाब्दे'ति पुनरुक्तवदाभासः।

३४। अप्रतिलब्धवार्त्तैः परस्परविच्छिन्नत्वात् संवादाभावेन किंकर्तव्यविमूढैः।

३५। समस्तघोषैः समस्तघोषवासिभिरित्यर्थे बहुवचनम्। प्रवातैः वातुं प्रवृत्तः। आदिकर्मणि क्तः।

३६। कन्धरांसि शिरोधरा ग्रीवा वा। असुन्प्रत्ययान्तः शब्दः।

३७। कतिभिर्गोभिः व्यसनार्चिताभिर्भुवः व्रजभूमयः पुप्लुविरे आच्छादिता आसन्।

३८। अपराभिर्मातृस्नेहपरवशाभिर्वत्सान् अङ्के क्रोड़देशे धृत्वा तस्थे इति गोजातिस्वभाववर्णनात् स्वभावोक्तिः।

(53b)नानाप्रकारं सुहृदां निकारं दृष्ट्वा समस्तं पुरुषोत्तमस्तम् ।
इन्द्रेण रोषान्मखभङ्गदोषात् संपादितं(XVIII)प्राक् स विवेद
संप्राक्(३९) ॥४०॥
बन्धूनथात्युल्बणवातवर्षात् पातुं मुकुन्दो विममर्श हर्षात् ।
उद्धृत्य शैलं करवै सलीलं गोवर्धनं छत्रमुदारमत्र ॥४१॥
वामेन हस्तेन स विश्वसार-स्तत्राद्रिवर्यं द्रुतमुद्दधार ।
दध्रे सखेलं गमनेऽभिवेलं छत्राकतुल्यं जलरोधकल्यम्(कल्यम्)(४०) ॥४२॥
गोपानथाचष्ट हरिः(XIX)प्रकीर्णं(४१) स्थानं कृतं भो विशतेह तूर्णम् ।
नेहास्ति भीः काचन वर्षवाता-न्माल्याऽपि कार्या धरणीध्रपातात्(४२)
॥४३॥
ते बल्लवाः केशवसन्निदिष्टा गोभिः सहैव त्वरया प्रविष्टाः ।
स्वच्छन्दमासन्निह कल्पकाले लोका यथेशे जठरे विशाले ॥४४॥
दध्रे महीध्रं बत सप्तरात्रं तैः स्तूयमानो मुदितोऽतिमात्रम् ।
गोपीजनैः सस्मितमीक्ष्यमाणः कृष्णः श्रिया भर्त्सितपञ्चबाणः ॥४५॥
(54a)एवं स सामान्यविशेषभावात् गोत्रस्य गोवर्धननामकस्य ।
संज्ञाद्वयं सार्थक-[यन् ] बभूव(४३) सङ्केतितं यद्द्वयमेव तस्य(४४) ॥४६॥
त्रातासु गोष्वेवमुदारवीर्य(XX)चोद्भाविते श्रीपतिना त्वहार्ये ।
मिथ्याप्रतिज्ञो बलभित् समस्तान् निवारयामास घनाघनांस्तान् ॥४७॥

---

३९। 'संप्राक्' इति पाठः। सम्यक् प्रकर्षेणाञ्चतीति तदभिमुखे गमनपरायण इत्यर्थः।
४०। जलरोधकल्यं जलरोधे वारिनिवारणे समर्थं क्लेशहरं यथा स्यात्तथा। 'कल्याणि कल्यानि तवाङ्गकानी'तवत् प्रयोगः। 'निरामयः कल्य' इत्यमरः।
४१। नतु सङ्कीर्णमप्रशस्तमिति यावत् परं तु विपुलम्।
४२। मेघजनितविपत्व्रातात्।
४३। सामान्यं जातिः। गोत्रशब्दो जातित्वे पर्वतवाची। विशेषो व्यक्तिः, स च गोवर्धनादिविशिष्टसंज्ञाऽऽत्मकः। एकत्र पृथिवीरक्षणेनान्यत्र व्रजस्थानां गवां वर्धनेनाभ्युदयेन संज्ञाद्वयं सार्थकं कुर्वन्।
४४। तथा च 'घनात् गोधनं गोवर्धनेन व्यरक्षि प्रतापेन गोवर्धनेने'ति दशावतारस्तोत्रे निर्देशः।

अद्रेस्ततो द्राङ्नितरामतन्द्रे(४५)शान्ते समीरेऽपगते च नीरे ।
व्रजे बहिर्यातवति स्वदेश-न्तं प्रापयामास गिरिं तदेशः ॥४८॥
तत्राथ सर्वेश्वरबन्धुराधं(४६)कृत्वा महेन्द्रः परमापराधम् (XXI) ।
सम्मार्जनं(४७)तस्य विधातुकामः कृष्णं द्रुतं द्रष्टुमुपाजगाम ॥४९॥
ऐक्षिष्ट कृष्णं स शिलोपविष्टं गोवर्धने गोपकुमारजुष्टम् ।
गाश्चारयन्तं स्मितशोभिवक्त्रं सहस्रपत्रोपमचारुनेत्रम् ॥५०॥
तस्योपरि व्योम्नि वितत्य पूर्णं छायां विधायानुगुणं सुपर्णम् ।
तिष्ठन्तमैक्षिष्ट(XXII) विचित्रपत्रं(४८) निर्भर्त्सयन्तं कनकातपत्रम् ॥५१॥
ऐरावणात् प्रत्य-(54b) वरूढ इन्द्रः प्रेम्णा प्रमोदातिशयेन सान्द्रः ।
भर्त्तृणां सहस्रं हरिदृष्टिकृष्टं स्वं प्रापयन्नेवमुवाच कृष्णम् ॥५२॥
भो कृष्ण [भू-] भारजिहीर्षया य-न्नीतोऽसि सि[स]त्वं तदिहाम्बुजाक्ष ।
यन्मन्महव्याहतिहेतुरुष्टो[II]मद्वृष्टितो गोकुलमभ्यरक्षः(४९) ॥५३॥
अत्रा(तो)ऽभिषिञ्चामि गवां गिरा त्वां गोविन्दनामाऽसि गवान्त्वमिन्द्रः ।
यस्मान्ममोपर्यपि तिष्ठसीन्द्रस्तस्माद् भुवि ख्यातिमुपैष्युपेन्द्रः(५०) ॥५४॥

---

४५ । अतन्द्रे तन्द्रारहिते सततमुद्योगिनि व्रजे व्रजवासिनि अद्रेर्बहिर्यातवतीति योजना ।

४६ । सर्वेश्वरश्चासौ बन्धुश्च जगन्नाथो देवराजस्येन्द्रस्यात्यागसहनो भगवान् । 'क्वानुजे मम निजे दनुजारा'वित्यादि पङ्क्तिः स्मरणीया । राधो हिंसा राध हिंसायामिति धातुपाठः ।

४७ । तस्यापराधस्य संमार्जनं प्रतिविधानम् ।

४८ । विचित्रपत्रं नानावर्णरञ्जितदण्डादिवाहनम् । कनकातपत्रविशेषणमेतद् । 'राज्यं स्वहस्तधृतदण्डमिवातपत्र'मिति कालिदासप्रयोगः । 'पत्रं तु वाहने पर्णे' इत्यादि मेदिनीकरः । निर्भर्त्सयन्तं निन्दन्तमतिशयानमिति यावत् ।

४९ । भूभारहरणेच्छया यस्त्वया वैकुण्ठादिह व्रजे नीतस्तत्तस्मादत्राभीत्यादि कथञ्चि-दनन्तरपद्येन योजनीयम् ।

५० । गवां मध्ये गिरा वाक्येनेति योजना । "अभिषिक्तं तु हृतं गोभिः शक्रो गोविन्दमव्यय'मिति हरिवंशपद्यांशस्य भावमुपजीव्येदम् । उत्तरार्धे नामनिर्वचनं निरुक्तन्यायेनाश्रयणीयम् ।

इत्येवमाभाष्य पवित्रतोयैरापृक्त-(५१)मैरावणसंश्रयेशम् ।
शक्रोऽभ्यषिञ्चन् स ददर्श गोभिः सुप्रस्नवस्नापितमद्रिदेशम् ॥५५॥

कृष्णं पुनः प्राह तदा सुरेशः पैतृष्वसेयस्तव मे हरीशः(५२) ।
अस्त्यर्जुनो नाम स पालनीयस्त्वया स कार्यो भवतः सहायः ॥५६॥

तञ्चाह कृष्णो ननु वेद जिष्णो कुन्त्यां प्रजातो भवतोजनिं(५३) तम् ।
आत्मोपमं पालयिताऽस्मि तावत् स्थास्यामि भूमावमरेश यावत् ॥५७॥

शक्रार्जुनार्थे भवता न तापः कार्यो(५४) न जाग्रत्तदरेः प्रतापः ।
भावी रणो येऽत्र युधिष्ठिराद्याः पञ्चापि रक्ष्या मम तेऽनवद्याः ॥५८॥

गोविन्देनैवमिन्द्रः प्रमुदितमुदितस्तं परित्यज्य रज्य-
न्नारुह्यैरावणं स्वं भवनमभिनवं भूतधामा जगाम ।
सान्द्रानन्दैरुपेन्द्रोऽप्यनुचरनिकरैर्निर्भरं तत्र शैले
केलिं कृत्वा दिनस्य व्युपरतिसमये गोभिरायात् स्वधाम ॥५९॥

इति **हरिचरिता**ख्ये नव्यसत्काव्यमुख्ये
प्रसरदमृतधारे वर्णितेशावतारे ।
कृतकलुषनिरासे तुष्टबालाविलासे
**नवम** उदितवेशः सर्ग एषोऽपदेशः ॥*॥

---

५१। पवित्रतोयैरापृक्तं तीर्थतोयैरार्द्रमीशं शक्रोऽभ्यषिञ्चदित्यन्वयः । पुण्याभिषेककर्मणि पवित्राणां तोयानामेवोपयोगसम्भवात् । 'आपूतयैरावणमश्रुयेशं' इति माः पाठः ।

५२। हर्योः स्वकीयाश्वयोस्तथा वर्णितयोरीशोऽधिपः ।

५३। भवतोजनिं भवत्सम्भवम् अलुक्समासः । कुन्ती तस्य माता भवांश्च पितेति यावत् ।

५४। तदरेर्दुर्योधनस्य प्रतापो न जाग्रत् क्षयोन्मुख एव । अतएव तत्कृते नास्त्युद्वेगस्यावसर इत्याश्वासनम् । जाग्रदिति गौणवृत्तिव्यपाश्रयः प्रयोगो यथैतदाख्यातजपदानां बहुषु नषधीयेषु पद्येषु । अत्र पुनः शब्दतोऽर्थतश्च 'किं ग्रहा दिवि न जाग्रति ते ते भास्करस्य कतमस्तु तुलाऽऽस्ते' इति तत्पङ्क्ती स्मरणीये ।

# हरिचरितम्

## दशमः सर्गः

अथ भृङ्गगुञ्जितकुञ्जमञ्जुलवञ्जुलावलिसङ्कुलं
कुलटामनोज्वरकारि कोकिलकाकलीकलकूजितम् ।
जितदेवबालककामनीयकफुल्लकेशरवासितं
सितकुन्दसुन्दरशारदोत्पलकौमुदीकलितान्तरम्(१) ॥१॥
तरसोर्मिमालि कलिन्दजाजलशीतलीकृतमारुतं
(54b)रुतमोहिताखिललोककोकविनादिताखिलदिङ्मुखम् ।
मुखरीभवत्कलहंसवंशसमुल्लसन्मधुर[स्वरं]
स्वरसातिशोभनविश्वमोहनसारसस्वनसौभगम् ॥२॥
भगवानवेक्ष्य बलं रतिं प्रति मानसं विदधत् स्वयं
वयसि प्रियेऽभिनवे वने नवबल्लरीशिरसा रजः ।
रजनौ स चेत्थमरीरमत्तरुणीर्नितान्तमनोहरं
हरणाय गोपनितम्बिनीनिकुरम्बमानसमन्वितम्(२) ॥३॥

---

१। सर्गोऽयं नानाछन्दोभिर्वृत्तजातिमयैः सन्निबद्धः। षष्ट्यधिकानि छन्दांस्यत्र ग्रथितानीत्यहो कविकर्मकौशलम्। आदितश्चतुर्षु पद्येषु गीतिकाच्छन्दः। छन्दोमञ्जरीकृताऽप्यच्युतचरिते महाकाव्ये रासवर्णनोपद्घात इदमेव छन्दः प्रयुक्तं यथा तत्रत्ये उदाहरणे। अत्र च ९४तमश्लोक उत्तरार्धे एतदेव च्छन्दः प्रविष्टम्। तत्र टिप्पनी द्रष्टव्या। आदितः श्लोकत्रयेणात्र वाक्यपूर्त्तिः। जितदेवबालकं सुरकुमारातिशायि यत् कामनीयकं सौष्ठवं तेन फुल्लमिति विग्रहः। एतेषु चतुर्षु मालया पठितेषु प्रत्येकं रुद्रटनिदर्शितवंशाख्यस्य यमकस्य विन्यासः। एषु यमकयमने तृतीयश्लोके स्वयं वयसीति रजः रजन्यामिति चतुर्थश्लोके मथे मथितेति नताः नतेति स्थिरे स्थिरमिति वैरूप्याणि कवीनामेवंविधप्रयोगदर्शनात् समर्थनीयानि।

२। अन्वितमित्यनुगतं प्रवणमिति यावत्। गोपनितम्बिनीनिकरस्य हरणाय विनोदाय। मानसमन्वितं नितान्तमनोहरमिति द्वे क्रियाविशेषणे। हरणायेति निकुरम्बान्तपदेन सापेक्षत्वेऽपि गमकत्वात् समासविधाने कुशकाशकल्पं समर्थनम्।

विततेऽतिमोहनवंशनिस्वन उत्थिते हृदि मन्मथे
मथिताखिलेन्द्रियवृत्तयोऽसमबाणबाणगणानताः(३) ।
न तदा प्रियात्मजवारिता निजमन्दिरेष्ववतस्थिरे
स्थिरमानसा मधुसूदनाननदर्शनाय ययू रयात् ॥४॥
इह काऽपि गोपतरुणी तु(४) कलितकलवंशनिस्वना ।
द्वारि गुरुषु निरसतसु बहिर्गतिरोधनादकृत कृष्णभावनाम् ॥५॥
प्रियतद्वियोगबहुतापविहतनिखिलाघसञ्चया ।
ध्यानबलजहरिशन्द-(५)मुखात्(55a)सुकृतक्षये सति विमुक्तिमभ्ययात् ॥६॥
अभिसारिणीस्तु हरिराह किमिह निशि यूयमागताः ।
क्रूरनिकरभवनं हि वनं गृहमाशु यात पतिसेवनोद्यताः ॥७॥
तदमूरमूमुहदसह्यवचनरचनेन केशवः ।
श्वासततिहतिनमद्वदनाश्चरणैर्महीं लिलिखुरत्युदश्रवः(६) ॥८॥
अथ ता मुकुन्दमिदमाहुरहह किमिदं हरे त्वया ।
वाक्यमधिकमुदितं क्वचन वयमागता हि तव सेवनाशया ॥९॥
चिरमास्महे स्म तव कृष्ण चरणकमलोपलालिकाः ।
ता न परिहर हरे रहसि प्रसभं वयन्तु भवतोऽनुपालिकाः ॥१०॥
यदभाणि कृष्ण भवतेह भवनगमनाय केवलम् ।
वेणुमधुररवबद्धतया तव पादतो विचलितुं न नो बलम् ॥११॥
पतिसेवनादरपरञ्च वचनमिह यत्त्वयोदितम् ।
तत्र पतिरसि विपतसु भवान् भवदङ्घ्रिसेवनमतीव नो(७)हितम् ॥१२॥
एवमादिविनयोक्तिविधाभि-र्वल्लरीवद-(55b) नचन्द्रसुधाभिः ।
प्रीणितः प्रणयतो ह्युपयाताः(८)कृष्ण इत्यभिदधे कृपया ताः ॥१३॥

---

३ । गणोन्नताः मा पाठः । असमबाणः कामः । आनता नम्रा वशीभूता इति यावत् ।
४ । तु इति तस्या इतरव्यावृत्तवृत्तिः । एवं विष्णुपुराणादावाख्याने ।
५ । शन्मङ्गलं ददातीति शन्दं मङ्गलाकरं मुखं तस्मात् तद्दर्शनादित्याशयः ।
६ । अत्युदश्रवोऽतिमात्रं रुदत्यः ।
७ । एतदन्तं पद्याष्टकमुद्गताख्यविषमाक्षरच्छन्दसा निबद्धम् ।
८ । 'ह्युपयाता' इत्यत्र 'हि' इति पादपूरणे ।

यूयमेवमतिभक्तिपरा मा-मागता बत वने निशि रामाः ।
तस्थुषाञ्चिततपःफलसारं प्राप्नुताभिलषितं मनसाऽरम्(९) ॥१४॥
तद्वचनश्रवणादपतापा-स्ताः कुपिताङ्गजनीकलितापाः(१०) ।
ह्रीभयभारनताननपद्मा-स्तस्थुरतिप्रभया जितपद्माः ॥१५॥
कृष्णविकाशिमुखाम्बुजलोला वक्रविलोकनषट्पदमाला ।
सा विरराम न गोपवधूनां वक्त्रविनिन्दितपूर्णविधूनाम्(११) ॥१६॥
तेन कटाक्षसितासितवृन्दो-ल्लोलचयेन च वृद्धिरवापि ।
केशवकाममहोदधिनोच्चैः स्त्रीवदनेन्दुशतप्रभयाऽपि(१२) ॥१७॥
तत्समये मधुसूदनचित्तं मारमहाम्बुधिमध्यनिमग्नम् ।
बल्लविकोच्चकुचाचलशृङ्गा-लिङ्गनरङ्गविधौ बत लग्नम् ॥१८॥
अथ काञ्चिदुदञ्चितचारुकुचा-मबलां नवपल्लवरम्यरुचाम् ।
(56a) स करेण विधृत्य लसद्वसने विचकर्ष दधार च सारसने(१३) ॥१९॥

---

९ । एतदन्ते पद्यद्वये स्वागता छन्दः । एवं २०—२२, ३४, ३५—तमेषु पद्येषु । तस्थुषां स्थितवताम् । अभिलक्षितमित्यनुषङ्गः । चितोऽर्जितस्तपःफलानां सारो यत्रेति विग्रहः । मनसा अरमलमत्यर्थं प्राप्नुतेत्यन्वयः ।

१० । एवं 'मा' पाठः । अङ्गजनीकलिता कामे नाश्रयमापिता ( इलिकली कामधेनुरिति स्मरणात् ) आपो याभिस्ताः विरहानलदग्धा कामेन प्रयोजकेन इति यावत् । 'ऋक्पूरब्धूरि'त्यादिना समासान्ताकारत्वम् । कुपिताङ्गजनिः संहतापा इति पाठकल्पनेऽपि सामञ्जस्यं स्यात् । एतदादिश्लोकचतुष्के दोधकं छन्दः । प्रभया जिता पद्मा लक्ष्मीर्याभिर्लक्ष्मीदेवीतोऽप्यतिरमणीयाः । 'कृदिकारादक्तिन' इति जनिशब्दस्यान्तस्वरस्य वैकल्पिकं दीर्घत्वम् ।

११ । वक्रविलोकनानि कटाक्षदृष्टयस्तासां माला न विरराम । अतितरां कटाक्षपाताः श्रीकृष्णप्रीतिसूचकाः प्रवृत्ताः ।

१२ । तेन कटाक्षसितासितसिद्वृन्दोलचयेन······(मा. पा.) । कटाक्षाणां सितासितत्वं लोके काव्ये च प्रसिद्धम् । उल्लोला बृहत्तरङ्गाः । 'अथोर्मिषु । महत्सूल्लोल-कल्लोला'वित्यमरः । चन्द्रोदये समुद्रस्फीतिरुत्तरलतरङ्गमालया भवति । तेनोद्दीपनेन च स्त्रियां मुखकान्तिवृद्धिर्नास्वाभाविकी ।

१३ । तोटकं छन्दः । एवं ६४, ६९, १०९ तमेषु पद्येषु । सारसनं मेखला । रुचा कान्तिः 'टापञ्चैव हलन्ताना'मिति समर्थनम् ।

सुन्दरीवदनमिन्दुमुदस्य प्रेक्षणेऽभवदुदारमुदस्य ।
चुम्बताऽथ हरिणा हरिणाङ्कः स स्फुटं भवति रिक्तकलङ्कः(१४) ॥२०॥
माधवस्तदधरामृतपाना-नन्दनिर्वृतमना बहुमानात् ।
तत्प्रशस्यजलधेरमृतार्थं बन्धनं (मन्थनं) स तदबोधि निरर्थम्(१५) ॥२१॥
बल्लवीवदनचन्द्रचकोर-स्तद्वलत्पुलकमङ्गचयोरः(१६) ।
निर्भरं सुपरिरभ्य रसं स प्राप पीनकुचतां प्रशशंस ॥२२॥
वसनमपनिनीषुणा कुचाभ्यां घनरुचिरनिजच्छविश्रिताभ्याम् ।
कर इह पिदधेऽमुना मुहुर्य-स्तदफलकुचमर्दि पर्यवास्यत्(१७) ॥२३॥
विगलितांशुकावप्युदंशुकौ हृदयमर्दकौ चित्तनन्दकौ(१८) ।
मृदुतनोः स्तनौ दैत्यभित्तनौ सुचिरसङ्गतौ स्थैर्यमागतौ ॥२४॥

---

१४। सुन्दरीवदनं चन्द्रमभिभूय वर्तते स्म । तस्य प्रेक्षणेऽस्य श्रीकृष्णस्य उदारमुद् अतिशयित उल्लासोऽभूत् । 'मुद्'शब्दः क्विबन्तः । रिक्तकलङ्कः कलङ्कहीनः । वदनमिन्दुमिति काकाक्षिगोलकन्यायेनोभयत्र संबद्धम् । 'साक्षात् सुधांशुमुखमेव भैम्या दिवः स्फुटं लाक्षणिकः शशाङ्क' इति नैषधपद्यं मनसि कृत्वेदं व्यरचि । तत्र श्लेषेण गगनसम्बन्धी शशाङ्कः लाक्षणिको लक्षणेन कलङ्केन संस्पृष्ट इति प्रतीतिः ।

१५। अमृतकल्पमधरमधु । तस्य हेलयैव लाभात् समुद्रमन्थनमनर्थकः श्रम एवेति प्रौढोक्तिः । तत्प्रशस्येति—तेनामृताश्रयत्वेन प्रशस्योऽर्हो यो जलधिरित्याकूतम् ।

१६। तद्वलदिति—तस्या बल्ल्या वलत्पुलकमुद्गतरोमाञ्चम् अङ्गचयमुरश्च । प्राण्यङ्गत्वात् समाहारः ।

१७। स्तनावरणमपसर्तुकामेनामुना कृष्णेन गोप्याः प्रतिबन्धकतया कल्पितः करः पिदधे । स्तनानामुज्ज्वलवर्णतया तेषु प्रतिविम्बिताभ्यां मेघश्यामलस्वकीयकान्तिभ्यामन्धकार-सृष्ट्या गोप्या यत् कराच्छादनं तद्व्यर्थमेवाभूत् । प्रकृते तु प्रस्तुत तत् पाणिभ्यां ततस्तनमर्दनकार्ये पर्यवास्यत परिणतम् 'पाणिरोधमविरोधितवाञ्छ'मित्यादि-माघपद्यीयपङ्क्तिप्रतिरूपमिदं पद्यम् । अत्र कामदत्ता छन्दः । "सप्तमं नवमं चान्त्यमुपान्त्यं च यदा गुरु । द्वादशाक्षरके पादे कामदत्तेति सा यथे"ति भरतः । एवं २९तमे श्लोके ।

१८। हृदयपदेन वक्षोऽवयवः—चित्तं पुनर्मन एवं । अत्र श्लोके स्तनयोरुदंशुकत्वेन वर्णनेनौज्ज्वल्यं प्रतीयते । कनकमञ्जरी छन्दः ।

स्तनकनकघटद्वये मुकुन्दः शुभकरपल्लवमर्पयन्ननन्द ।
विदधदधिकमङ्गलं यथाऽयं सुरमणमार-(56b)भमाण
आदितायम्(१९) ॥२५॥
हरिविरहजतापततन्वी-कुचयुगले मिलितं हरेः कराब्जम् ।
समकुचदुचितं रसस्य कान्ते-र्यदुपचयाद्भुतभानमत्तसज्जम्(२०) ॥२६॥
नखलिखितघनस्तनार्दनात्तत्-करकमलं निजहस्तपङ्कजेन ।
यदरुणदरुणेक्षणः क्षणात्तं प्रकटं स कण्टकमाततान(२१) तेन ॥२७॥
सिचयमयमपास्यानङ्गरङ्गेन तस्या हरिरवददिहान्यां ह्रीनदीसन्निमग्नाम् ।
जलमनु विजहर्थ व्यस्तवासा मदर्थं पयसि यदुपसन्ना तत् फलं त्वं
प्रपन्ना(२२) ॥२८॥
अग्रेवणं विषमबाणशरौघभिन्ना-बुद्भासिता बत दिगम्बरभावविन्ना(२३) ।
अर्धेन्दुलक्ष्म्यधिगतामलचारुभाला तादात्म्यमाप हरिणा सममत्र
बाला ॥२९॥

---

१९। सुरमणमारभमाणः सुरते प्रवृत्तः। मङ्गलकलससमकक्षतया मङ्गलकर्मणीव आदित स्वीकृतवान्। सुरमणमित्यत्राप्रतीतताऽर्थदोषः। शुभेति श्लेषः।

२०। अद्भुतभानं विचित्रदीप्ति तथा मत्तसज्जं च। सज्जा चन्दनादिचर्चा। मत्तसज्जं गर्वस्तम्भितप्रसाधनं कुचयुगम्। २५-२७ पद्येषु तथा ७९, ११२, ११४ समपद्येषु पुष्पिताग्राछन्दः। रसस्येत्यत्र-'रथस्ये'ति मा. लि. पाठः। यदुपचयादिति रसोदयात्।

२१। 'स्तनाननना तत्केवकमले'ति माः पाठः। क्षणात् सद्य एव। कण्टकं पुलकमित्यपि।

२२। विवसनायास्त्यक्तलोकलज्जाभयाद्यन्तरायाया एकान्तितया भगवन्निष्ठा कृच्छ्र-साधनफला। मालिनीच्छन्दः। अन्योऽपि नदीमवगाहते फलकामः फलप्राप्त्या च कृतार्थो भवतीति।

२३। वसन्ततिलकं छन्दः। एवं ३३, ७९, ११३, ११३ समश्लोकेषु। अग्रेवणं व्रजविपिनाग्रे अथच व्रजस्य संज्ञाऽपि (अग्रेवणं=Agra ?)। विवसनाऽर्धचन्द्राकृति-ललाटदेशेनातिसुन्दरी शिवसदृशी [सा कामबाणपीड़िता तस्मात् मदनदाहकाङ्क्षीता तादात्म्यमनेन स्वकीयात्मनिवेदनेन हरिणा हरेण शिवेन सहैकात्मतामभिन्नत्वं गता। 'हृदि बिसलताहारो नायं भुजङ्गमनायक'इत्यादि 'प्रहर न हरभ्रान्त्याऽनङ्ग

एवमन्यरतिरम्यमृगदृशः प्रेयसीः कुसुमबाणसुसदृशः ।
स्नेहपूर्णहृदयेन स रमय-न्नीश्वरोऽत्र विजहार सुखमयः(२४) ॥३०॥
बल्लवदारास्ते सुरसारा-श्छद्म-(57a) विहारे(२५)प्राप्य मुरारेः ।
उद्गतगर्वा न्यक्कृतसर्वाः स्वात्मवशं तं जज्ञुरनन्तम्(VI) ॥३१॥
तद्वशगोऽपीहामतगोपी-गर्वमहत्त्वमन्तरधत्त ।
कामपि धन्यां बल्लवकन्या-मात्मसहायीकृत्य नु मायी(२६) ॥३२॥
अन्तर्हिते प्रियतमे सममिन्दुमुख्या
प्रोवाच वाचमपि काचन तत्र मुख्या ।
किं कार्यमत्र करणीयतमं वयस्या-
स्तद्वत्यसौ(२७)हृदि यदत्र बभूव यस्याः ॥३३॥

---

मुधा किमु धावसी'त्यन्तं गीतगोविन्दपद्यमुपजीव्यैवमुपस्थाप्यते । 'हरिश्चन्द्रार्के'त्युपक्रम्य 'हरेऽब्जऽंशौ शक्रे लोकान्तरे पुमानि'ति मेदिनीकरः । दिगम्बरेति—दिगम्बरभावेन शिवत्वेन वित्ता प्रसिद्धा अथच विवसनत्वेन वित्ता भोगवती-'वित्तो भोगप्रत्यययो'रिति पाणिनिसमर्थनम् ।

२४। अन्यरतिरम्याः परकीयप्रीत्याऽत्मोत्कर्षेण परां कान्तिं गता मृगदृशः हरिणनयना गोपवनिताः । कुसुमबाणसुसदृशः कामस्य पुष्पायुधवत्सुकुमारतनूः । स्नेहेति—अत्र स्नेहपदेन रसशास्त्रे 'आरुह्य परमां काष्ठां प्रेमा चिद्दीपदीपनः । हृदयं द्रावयन्नेष स्नेह इत्यभिधीयते ॥' इति निरुक्ताया रतेरवस्थाभेदः ।

२५। छद्मविहारे प्राप्य मुरारेः हरेः सङ्गमित्यध्याहारः । रुक्मवती छन्दः । एवं ५२, ५३, ५४ तमश्लोकेषु । जज्ञुर्मेनिरे ।

२६। तद्वशगोऽपि मायी इह अमतगोपीगर्वमहत्त्वं यथा स्यात्तथा नु कामपि धन्यां बल्लवकन्यां आत्मसहायीकृत्य अन्तरधत्त अन्तर्हितोऽभवत् । नु वितर्के । धन्यामन्याङ्गनारमणीसुलभाहङ्कृतिशून्याम् । आत्मसहायीकृत्य तया सहेति यावत् । एवं हि पुराणाख्यानेऽपि वृत्तान्तोपन्यासः । 'तासां तत् सौभगमदं वीक्ष्य मानञ्च केशवः । प्रशमाय प्रसादाय तत्रैवान्तरधीयत' इति ।

२७। यस्या गोप्यास्तद्वति श्रीकृष्णमये हृदये यद्बभूवासौ श्रीकृष्णः । अत्र किमत्रार्थं प्रतिविधेयं वयन्तु अस्वतन्त्रा एवेति यावत् ।

चारुवृत्तचरणाभ्युपपन्नाः
सूक्तयोऽलमुदयाय विधेयाः ।
शब्दतोऽर्थगतितश्च सुधावत्
प्रीतिमादधति(२८)सततु(VII) विधेयाः ॥३४॥

ऊचे **तनुमध्या** नाहं खलसाध्या ।
कृष्णोऽप्युपगच्छन्नेयं तमिहैच्छत् ॥३५॥

कामाम्बुधिमग्नां पादाम्बुजलग्नाम् ।
मां स प्रविहाय क्वायाद् बहुमायः(२९) ॥३६॥

**शशिवदना**ऽऽह स्मरशरदाहः ।
हरिविरहिण्या वलति तरुण्याः ॥३७॥

तमिममुदारं त्रिभुवनसारम् ।
न परिहरामः समभि-(57b)सरामः ॥३८॥

प्राहेदं **मदलेखा** वागेषा श्रुतिशाखा(३०) ।
गोविन्दे गुणसिन्धौ मानो मे प्रियबन्धौ ॥३९॥

आवासः सकलानां श्रीकृष्णः स कलानाम् ।
त्यक्त्वा तं रमणीनां क्व श्रीः मारमणीनाम्(३१) ॥४०॥

---

२८। परमगतिकगत्या तदनुच्छन्दनमेव वरमिति तथैव चक्रुरित्यमृतस्यन्दीनि मधुर-वाक्यानि तमुद्दिश्य प्रोचुः। सूक्तयः सुभाषितानि। सूक्तयोऽपि छन्दरैर्वृत्तैश्छन्दो-भिश्चरणैः श्लोकचतुर्थभागैरुपपन्ना युक्ताः। साधुष्वेषामेव प्रयोगः कल्याणोदर्को भवति। विधेया एकत्र कार्या अपरत्र वशवर्तिन आश्रवाः।
इतोऽनन्तरं षडक्षरपादादारभ्यैकविंशत्यक्षरपादं यावत् तदाश्रितानां वृत्तानां प्रथितानां विन्यासः। श्लोकेषु तेषु संज्ञाशब्दा अर्थतश्चैव तत्तत्प्रकरणे योज्याः।

२९। बहुविधमायाविरचनपटुरित्यर्थः। एषु छन्दःसंज्ञा बृहत्तलीसाक्षरैर्मुद्रिता दर्शिता। इतः प्रभृति ९६-तमं श्लोकं यावत् छन्दसां प्रत्येकमुदाहरणद्वयमव्यवहितमुपलभ्यते।

३०। वाक् वाणी श्रुतिशाखा शाखास्वधीयमानो वेदमन्त्र इवाभ्रान्ता। मानो बहुमानो गौरवमिति यावत्।

३१। मारमणीनां कामसर्वस्वभूतानामथच लक्ष्मीभूतानां बह्वीनां तथा च 'श्रियः कान्ताः कान्तः परमपुरुष' इति ब्रह्मसंहितायां व्रजलीलासङ्गिनीनां लक्ष्मीत्वेन निर्देशः।

**विद्युन्माला** नाम्ना बाला कामान्दोला मत्तोल्लोला(३२)।
विष्णोः खेलाप्राप्तौ केला-वाधत्ते नावासे हेलाः ॥४१॥
लीलाकन्दं या गोविन्दं ध्यात्वाऽऽनन्दं चक्रेऽमन्दम्।
आलोकयेशं श्रीमद्वेशं तन्तुङ्गेशं सत्सन्देशम्(३३) ॥४२॥
**चित्रपदा**मथ वाणी-माह परा मम पाणी।
कृष्णपदाम्बुजसेवा-स्वादधिरे खलु देवाः ॥४३॥
किञ्च ममाखिलमङ्गं यत्तु हरेरनुषङ्गम्।
याति यदा सफलत्वं तर्हि ममेह ममत्वम्(३४) ॥४४॥
तं **समानिका**ऽऽह काचि-दालि तावकीनवाचि।
रोषमेवमावहामि(३५) पार्श्वमेव ते नयामि ॥४५॥
यो जगाम नो विहाय सूक्तिमात्रमप्रदाय।
तं कथं नु नाम(58a)वाम-माश्रयाम धाम(३६)याम ॥४६॥
अथापराऽऽह गोपिका हरिं प्रति प्रकोपिका।
न चालि तं द्रुतं वृणु **प्रमाणिका**(३७) गिरः शृणु ॥४७॥

---

३२। कामान्दोला कामवशादभीष्टसिद्धौ संशयान्दोलितचित्ता। मल्लोला बृहन्तस्तरङ्गाः। मत्तोल्लोला मदभरतरङ्गितभङ्गी।

३३। तुङ्गेशं सर्वेषामुपरि ऊर्ध्वतममखिलाधिपम्। सत्-सन्देशं दौत्यप्राप्यलक्ष्यम्। 'कृदभिहितो भावो द्रव्यवत् प्रकाश' इत्यभियुक्तस्मरणात्।

३४। हरेरनुषङ्गं हरिणाऽभिन्नाकृतित्वेन सम्बद्धम्। ममाङ्गं यदि सकलत्वं याति तर्हि तदा तदैव इह संसारे मम ममत्वं ममेति भावः समञ्जस इति शेषः। ४५—४८ तम-श्लोकेषु समानिकाप्रमाणिकयोरानुष्टुभत्वपक्षे प्रत्येकमुदाहरणद्वयी।

३५। समानिका मानमयी। स्वार्थिकः कप्, ततः स्त्रियां टाप्। रोषमेवेति—रोषोऽमर्षः। तत्कृतत्वरोत्साहवती, अहं तेऽभिलाषं सम्पादयामीति यावत्।

३६। वामं प्रतिकूलमाचरन्तमिव तं श्रीकृष्णम्। नाम सम्भावनायाम्। धाम स्वकीयमालयमेव याम इति मानाधीनता।

३७। द्रुतं न वृणिवति मानावलम्बनमुपदिशति। प्रमाणिकाः कार्याकार्यव्यवस्थितौ प्रमाणत्वेन ग्रहणीयाः।

यद्दीदृशो तनोमलः ( मनोमलः ) सुरालयो भवेच्छलः(३८)।
तथाऽप्यहं न तं भजे मनः स्फुटं नु तं व्रजेत् ॥४८॥
हरिशरणबलात्ता-मकथयदथ काचित्ताम्।
**भुज[ग]शिशुभृता**द्गीता-ऽप्यभिसरणरसाभीता(३९) ॥४९॥
इह सुमविशिखैर्वामः(४०) प्रियसखि सकलैः कामः।
विदलति निखिलं मर्म द्रुतमभिसरणं कुर्मः ॥५०॥
इत्थं **मत्ता** मदनबलात्ताः कृष्णध्यानादपगतमानाः।
चिह्नन्यस्तं(४१)विविशुररण्यं गायन्त्योऽमुं प्रतिपदपुण्यम्(VIII) ॥५१॥
तासां गीतं परमभिनीतं श्रावं श्रावं कृतरसभावम्।
आसन् मृग्यश्चिरमवशास्ता-श्चित्रन्यस्ता इव कवलैस्ताः(४२) IX) ॥५२॥

---

३८। मनोमल इति पाठकल्पनायां मानरूपं चित्तकालुष्यम्। एवं चित्तकालुष्येण कर्मणा विहितेन स्वर्गोऽपि च्छलोऽर्थवादमात्रेणालीको देवभजने प्ररोचनायै अपर्याप्तः। मम तस्य भजने नानुबन्धः न च निर्बन्धोऽपि। नु पुनर्मन स्तमेवानुधावतीति किं करोमि।

३९। भुजगशिशुसुतात् सर्पाहितात् विषादिति यावत्। अत्र भीताऽप्यभिसरणरसात् त्वत्पार्श्वोपनयनफलात् अभीता प्रत्युत तत्रान्तराकूतवती यतस्त्वमस्माकं पालकः पतिः। 'विषजलाप्ययाद्व्यालराक्षसा'दित्यादि भागवतपद्यमुपजीव्येदं कथनम्। हरिचरणेति मा. पाठः। हरिरेव शरणं रक्षिता। तद्बलात्ता तस्मिन्नेव कृतनिर्भरेयं गोपीति कवेराकूतम्।

४०। सुमविशिखैः कुसुमबाणैः। वामः प्रतिकूलाचरणशीलः। कामो वाम इति हि प्रवादः।

४१। कृष्णध्यानादिति एवं 'तच्चिन्ताविपुलाह्लादक्षीणपुण्यचये'ति विष्णुपुराणे। मानः सुकृतजनितोऽहङ्कारः। चिह्नैः पदाङ्कैर्न्यस्तं न्यासरूपेण विशेषितम्। एवमपि पुराणाख्याने। मत्ता अपगतमाना इति विरोधाभासः।

४२। कालिदाससरणिमनुसृत्य (रघु १३।२५, शाकुन्तले ४।१२) वर्णनेयम्। गीतमिति विशेष्यपदम्। कृतरसभावं यथा स्यात्तथाऽभिनीतमिति योजना। परं श्रेष्ठं, गीतमित्यस्य विशेषणं क्रियाविशेषणं वा।

**रुक्मवती**ति प्राह वनाली-मालि स दृष्टस्ते वनमाली ।
हृद्बलचौरं नन्दकुमारं तं मृगयामः क्वाभिसरामः(४३) ॥५३॥
(58b)हे तुलसीशे शोभनवेशे सत्यसमुत्थं त्वं वद तत्त्वम् ।
कामविलासी नो निजदासी-रत्र विहाय क्वायमयासीत्(४४) ॥५४॥
काऽपि गोपवनिताऽथ मालती-मालपद्धत हितं वितन्वती ।
नास्त्यनादृति**रथोद्धता**ऽपि न(४५) तर्हि किं हरिरयाद्विहाय नः ॥५५॥
किं क्षणः स भविता पुनरेव-मत्र कृष्णमभिवीक्ष्य पुरेव ।
स्वागतादिभिरहं तददम्भं पूजयिष्य उदयत्परिरम्भम्(४६) ॥५६॥
**स्यादिन्द्रवज्रा**ऽहतिरत्र सह्या यद्वाऽऽधिराज्याच्च्युतिरत्र मह्याम् ।
न त्वेव कृष्णेन समं वियोगः(४७) सोढव्य एव क्षतसर्वभोगः ॥५७॥
उ**पेन्द्रवज्रा**भिहतो गिरिः स्यात सुजर्जरः सानुचरोऽयतेऽयम् ।
भवद्वियोगादतिजर्जरन्तन्मनोऽतनोच्चित्रमभागधेयम्(४८) ॥५८॥

---

४३। हृदयं बलेन असमसाहसिक्येन चोरयति यस्तम्। इदं रुक्मवतीत्याख्याया गोप्या वनराजिं सखीत्वेन सम्बोध्य वचनम् ।

४४। ईशे ऐश्वर्यसम्पन्ने वैष्णवतन्त्रे तुलस्याः कृष्णप्रेयसीत्वनिदर्शनात्। सत्यसमुत्थं सत्याश्रयमनलीकमित्यर्थे वाक्प्रपञ्चः ।

४५। अथ वाक्यारम्भे। उद्धता मर्यादालङ्घिनी अनादृतिरुपेक्षाऽपि नास्ति। तर्हि तथापि। अत्र तृतीयचरणे लध्वन्ते दीर्घता वामनाद्यालङ्कारिकमते दोषावहा। मालत्यत्र मालतीलता। तां प्रति पूर्ववद्भाषणम् ।

४६। उदयत्परिरम्भमालिङ्गनपूर्वकमदम्भं विनीतममायिकं तं कृष्णम्। अदम्भं पूजयिष्य इति क्रियाया विशेषणं वा। उदयत्परिरम्भं सूचितालिङ्गनमिति कृष्णविशेषणम्। अत्रापि क्रियाविशेषणपक्षः साधीयान्। क्षण उत्सवः ।

४७। आद्यचरणयोर्निदर्शनाऽलङ्कारगर्भोऽनुयोगः। एवमनन्तरश्लोकेऽपि। व्यतिरेकश्च वाच्य एव। अभागधेयमिति अप्रशस्तं विधिनियन्त्रणमित्यर्थः ।

४८। अतिजर्जरं तन्मनश्चित्रमतनोदिति योजना। हे उपेन्द्रेति च्छेदः। तदनुभूत-वैक्लव्यं मन आलम्बनम्। तदित्युत्तरार्धे अयमिति पूर्वार्धोद्दीपनविभावाद्व्यतिरिच्य निर्देशः ।

चूततरुं तरुणीदमभाणीत् कोकिलकाकलिकोमलवाणी(४६)।
सालरसाल [रसाल]सगामी किं भवता हरिरैक्ष्यत कामी ॥५६॥
**दोधक**-(59a)मस्मदतिस्मयखिन्नः(५०) सन्मददोधकमैतमधान्नः ॥
तत् सहकार मया सहचारी ब्रूहि हरिः क्वचिस्स कामविहारी ॥६०॥
ऊचे लीला**शालिनी**·गोपबालाऽऽलोक्याशोकं प्रार्थकापास्तशोकम्।
किं नु प्रेयानीक्षितस्ते हरिर्यन्नित्यं कामः सान्वयं धत्स्व नाम(५१) ॥६१॥
अथापरा बल्लविकाऽऽह मल्लिका-म[ये कुतः सन्द-] दृशे त्वयाऽच्युतः।
ततेह (तयेह)(५२) **वंशस्थविल**स्फुटस्फुरत्सुधाऽवसिक्तध्वनिनाऽथ सूचितम् ॥६२॥
व्या**लेन्द्रवंशाऽति**-(५३) वलद्विषानलं यः सञ्जहाराधिहृदं महानलम्।
पातु सदा न्यस्तधिया विभावसौ पापच्यते नो परमे विभावसौ ॥६३॥

---

४९। कोकिलेत्यादि—तरुणीविशेषणमिदम्। हे सालरसाल साररसयुक्ताम्रतरो। रलयोर्व्यत्ययो बहुलम्। रसालसगामीति हरेर्विशेषणम्।

५०। अतिस्मयखिन्नोऽस्माकमतिमात्रेण गर्वेन खिन्नो व्यथित एतं सन्मददोधकं हर्षदोग्धारं दोधकं वत्सधात् मधादिति यात्। 'वत्सः शकृत्करिर्दोग्धा दोधको दोध इत्यपी'ति शब्दरत्नावल्यां मथुरेशः। सहचारीति तात्पर्ये णिनिः।

५१। ६०-६१ श्लोकयोः क्रमव्यत्यासः। दोधकाधिकारे आद्यः श्लोकः परतः संन्यस्त इति तत्र हेतुः। दोग्धीति दोधक इति हलायुधो मृतसञ्जीविन्यां पिङ्गलच्छन्दःसूत्रवृत्तौ। नित्यं कामः सर्वदेव कामोऽप्रतिहतगतिः। सान्वयमन्वर्थं नाम धत्स्व धारय।

५२। तया गोप्या इहात्र प्रदेशे वंशस्थविलात् वेणुच्छिद्रात् स्फुटं स्फुरता प्रकाशमानेन सुधाऽवसिक्तध्वनिना सुधावर्षिणा रवेण सूचितोऽच्युतः किं त्वया मल्लिकाऽऽख्ययाऽदर्शीति प्रश्नः। 'बल्लविका''मल्लिके'त्यनुप्राससृष्टिः।

५३। व्यालेन्द्रवंशात् कालियाख्यश्रेष्ठनागकुलात्। परमे विभौ परमेश्वरे तस्मिन् सदा न्यस्तधिया अनन्यासक्तमनसा विरहो दारुणो भवति। प्रकृत्यादित्वात् तृतीया। अधिहृदमित्यत्र द्वितीये वर्णे शास्त्रानुमता लघुता। यो विभावसौ विरहरूपाग्नौ नो पापच्यते न भृशं पचति। वयं तु विरहाग्निना पचाम एव।

अथ काचिदवोचत तत्र सखी त्वमितो कलावती मेऽभिमुखी(५४)।
किमपीह विषीदसि मुग्धतमा हरिरेष पुरोऽस्म्यवलोकय माम् ॥६४॥
इह पश्य ममास्यगतिं **ललिता**-मिति केशव[व]ललना बलिता।
मृदु वेणुमवीवद[दि]त्यबला हरिकेलिषु(५५)शिक्षितसर्वकला(X) ॥६५॥
हरितयाऽऽत्म-(59b)विभावनकृतपरा चलदुदूखलबद्धकलेवरा।
**द्रुतविलम्बित**-(५६)मित्यपराऽवनौ विदलितावपरौ यमलार्जुनौ ॥६६॥
अहं कालियोऽस्मीति तत्रालिचक्रे **भुजङ्गप्रयातं** परा चानुचक्रे।
शिरोऽथारुरोहापराऽस्या वयस्या मुकुन्दोऽहमस्मीति चारुस्मितास्या ॥६७॥
ऊढगोवर्धनं श्रीहरिस्पर्धनं कुर्वती रागिणी काऽपि च **स्रग्विणी**।
जग्रथे सुस्रजं व्याजह्रे(५७) च व्रजं नात्रभीर्वर्षतः स्थीयतां हर्षतः ॥६८॥
अथ शिशुकृष्णानुकरणकृष्ट्या स्तनयुगधिष्ण्या रुदितमथान्या(XI)।
प्रपदमुदस्याहत सुवयस्यां(५८)शकटचरित्रां **कुसुमविचित्राम्** ॥६९॥

---

५४। अयि कलावति त्वमितोऽट इतोऽपसरेति यावत्। अहं कृष्णभङ्गीमनुकरोमि। एवमनन्तरेषु पञ्चसु पद्येषु कृष्णलीलाऽनुकरणं प्रसज्यते।

५५। हरिकेलिषु हल्लीसकादिषु राससदृशक्रीडासु। ललितां कमनीयामास्यगतिं मुखविवलनभङ्गीम्।

५६। द्रुतविलम्बितं यथा स्यात्तथा अचलत् चंक्रमणमकरोत्। तत्र व्यापारे तस्या उलूखलांशद्वयेन कथञ्चित् यमलार्जुनवृक्षद्वयप्रतिभानम्। भागवतेऽनुरूपं वर्णनम्...'बद्धाऽन्यया स्रजा काचित्तन्वी तत्र उलूखले। भीता सुदृक् पिधायास्यं भेजे भीतिविडम्बन'मिति।

५७। सुस्रजं शोभनां मालां ग्रथितवती च व्याजह्रे व्रजमुद्दिश्यैवमुवाच। 'व्याजह्रे' इत्यत्र द्वितीयस्वरो लघुः 'प्रह्वे वा' इत्यस्य विधानस्यादेशिकत्वात्। एवमष्टमे १०३-तमे पद्ये यथा विवृतं प्राक्।

५८। स्तनयुगधिपति मा. पाठः। काचित् गोपी शिशुकृष्णलीलामनुकुर्वत्यपरस्या गोप्याः स्तनयुगोपरिदेशे स्थितवती रुदितवता क्रन्दनं चकार। तदनन्तरं काचिदन्या गोपी पदाग्रभागेण शकटविचित्रां शकटायमानामन्यां सुवयस्यामाहत। आत्मनेपदं चिन्त्यम्। सुवयस्यामुद्दिश्यत्यकर्मकत्वाश्रयेण समर्थनम्। भागवतपुराण-मवलम्ब्योभयत्र वर्णनम्। प्रथमा पूतनावधं द्वितीया शकटभञ्जमभिनिनाय।

एवं किल नाना लीला विदधानाः कृष्णार्पितचित्तास्तास्तद्विरहार्त्ताः ।
[ आसन् ]वन इन्दूद्द्योतादति मन्दूयन्त्यो(५९)बत बालाः
शिञ्जन्मणिमालाः ॥७०॥

हरिरहितामरसं-(६०)विचरन्ती-मकथयदालिरथाभिसरन्ती ।
अगमदनेन पथा सखि भिन्ना पदततिरत्र सरोरुह-(60a)चिह्ना ॥७१॥

प्रमिताक्षरां शृणु ममेह गिरं गतवाननेन स पथा न चिरम् ।
ध्वजवज्रपङ्कजयवाङ्कुशं(६१)बत पदकं हरेः स्फुरति यन्नु तत्त्वतः । ७२॥

चन्द्रवर्त्म सममेतदेव गतं वर्त्म चारुतरविष्णुपदनतम् ।
तापहारि भवतारकममलं निस्तलक्ष्ममभिपश्यत चपलम्(६२) ॥७३॥

श्रुततद्वचना मृगलोचना हरिपदानुगता हरिणप्लुताः(६३) ।
समुपेत्य तदा ददृशुर्मुदा तमनुसस्रुरनेन पथा वने ॥७४॥

अथ पथि परिहाय पुष्पिताग्रां नवबनराजिमधिश्रियं समग्राम् ।
हरिपदकततीर्विलोभनायाः पदनिचयान् समपश्यदङ्गनायाः(६४) ॥७५॥

---

५९ । इन्दूद्द्योताज्ज्योत्स्नाप्रकाशादुद्दीपनादति मन्दूयन्त्योऽतितरामनवस्थितचित्ताः । कण्ड्वादिभ्यो यगिति यक् । गणपाठे तु अस्यानुपलम्भः । मन्तुञ अपराधे रोष इत्येक इति तत्र पठितम् ।

६० । हरिरहिताम् कृष्णविरहिणीम् अरसं विहरन्तीमतात्पर्यं शून्यमनसा विचरन्ती-मालिमन्याऽऽलीम् ।

६१ । पङ्कजवरेति मा. लि. पाठः । तत्र वरपदं पादपूरणार्थम् । भागवते तु यवाङ्कुश-मिति दृश्यते ।

६२ । निस्तमक्ष्मभिपक्षत······मा. पाठः । निस्तलाऽनवगाढ़ा क्ष्मा भूमिर्यत्र । चपलं तिरश्चीनमिति यावत् न केवलं चञ्चलम् । वृत्तसंज्ञासामञ्जस्याय स एव साधीयान् कल्पः ।

६३ । हरिणप्लुता मृगवत् प्लुतगामिन्यः । यद्वा हरिणप्लुतेति विसर्गहीनः पाठः । हरिणस्य प्लुता प्लुतगमनेन समुपेत्येति सम्बन्धः । तथात्वे प्लुत् इति क्विबन्तः ।

६४ । अधिश्रियमधिगता श्रीर्यया तां शोभामयीम् । पदकं शोभनह्रस्वपदमित्यर्थः । तती राजीरङ्किताः । ७१-श्लोके पूर्वमृष्टापरासखी समपश्यदिति क्रियायाः कर्त्री ।

ऊचेऽथ प्रियसखि का **प्रहर्षणीयं**

यत्सङ्गान्मधुरिपुणा प्रहर्षणीयम्(६५)(XII)।

सस्नौ सा किमु तपसि स्वयं प्रयागे(६६)

गोकोटिं किमथ ददौ द्विजाय यागे ॥७६॥

यस्या वश्यः कामकलायामतिशूरः

कृष्णस्तस्या रम्यजतु**र्मत्तमयूरः**(६७)।

सान्द्रानन्दा सा शरदि(60b)स्यादपदोषा

मन्ये धन्या केवलमेषा वरयोषा ॥७७॥

इह काऽप्यवोचत **सुमञ्जुभाषिणी**

ध्रुवमम्बुधावमृत कृष्णतोषिणी।

इयमत्र येन हरिणा सहाधुना

रमते रहस्यति-(६८)विहारसाधुना ॥७८॥

काचिद्वधूः समवधूय तदाऽऽचचक्षे

सा सुन्दरी सुकृतिनी ललनासु लक्षे(६९)।

याऽसौ **वसन्ततिलकं** किल कण्ठलग्ना

कृष्णं चिरं रमयति स्फुटभावमग्ना(XIII) ॥७९॥

देवीनामपि वन्द्या देवानामभिनन्द्या

जन्मौघैः कृतपुण्या सैवैका गुणगण्या।

कृष्णोऽस्या यद**लोलां**(७०) भक्तिं बहु मेने

येनासाविह कान्तामेकान्ते भजते ताम् ॥८०॥

---

६५। प्रहर्षणी इति छन्दोनामात्र। यत्सङ्गात् प्रहर्षणीयम् आनन्दयितव्यम्।

६६। तपसि माघे मासि। माघमासे प्रयागस्नानं बहुतर पुण्यफलमाहुधर्मशास्त्रकाराः।

६७। रम्यजतु रमणीयश्लेषाधायिवस्तुकः। इदं मत्तमयूरमिति च अतितरां मत्ता मयूरा यस्मादिति द्वे कृष्णविशेषणे।

६८। विहारसाधुना रतिप्रवीणेनामुना रहसि गुप्तं यथा स्यात्तथाऽति रमत इति योजना।

६९। लक्षे ललनासु ललनालक्षमध्ये निर्धारणे सप्तमी। लक्षे इति विंशत्यादेरनावृत्तावेकवचनम्। वसन्ततिलकं वसन्तस्य ऋतुराजस्य तिलकं भूषणम्। वसन्तेत्युद्दीपनभावस्य ऋतुसामान्यस्योपलक्षणम्।

७०। मसौ स्मौ गावलोलेति हेमचन्द्रः। लोलेत्यपरे। उभयथाऽप्यत्र लक्ष्यलक्षणसङ्गतिः। सप्तभिः सप्तभिर्यतिः।

इति पथि कलयन्ती तत्र तत्र प्रयान्ती
गलितकुसुममालामाकलय्याह बाला ।
प्रियतमपरिरम्भादत्र दामातिदम्भा-
न्मृदितमकमनीयं(७१) किं जहौ **मालिनीयम्** ॥८१॥

किमियमकृत बत शमबधिविधुरं(७२)
रहसि पिबति यदधरमधु मधुरम् ।
(61a)मधुरिपुरनुपमवपुरमरवर-
स्तुलितललितशशि**मणिगुणनिकरः**(७३) ॥८२॥

रतिरियमुल्लसद्रसमयी हरिः स कामः
किमु जनकात्मजा गुणवती स चाभिरामः ।
किमथ शची रुचेर्विहरते स नाकभर्ता
बत **करवालिनी** सहभवा(७४)किमेवमार्ता(XIV) ॥८३॥

लसन्नानापत्रावलीविलसनोल्लासिसुमनाः
स्फुरद्रत्नाकीर्णा कनकरुचिरा चारुजघना ।
स्थलीयं किं मेरोः स्तनयुगसदुच्चैः**शिखरिणी**(७५)
हरेः क्रीडाभूमिः प्रविततनितम्बा सुतरुणी ॥८४॥

---

७१। प्रियतमपरिरम्भादतिदम्भादतिप्रकृष्टाहङ्कारवशात् मृदितमङ्गसङ्गात् म्लानमकमनीयं दाम जहावित्यन्वयः ।

७२। 'शमबाधविधुर'मिति मा. पाठः । अवधिविधुरं निरवधि मङ्गलं किमियमकृतेति वितर्कः । 'विधुर'पदेन लक्षणया राहित्यमवसीयते । तावत्फलं सुकृतं नात्र क्लिष्टमिति कालिदासीयशाकुन्तलपद्यस्यानुरणनम् ।

७३। तुलितः समीकृतः शशिमणेश्चन्द्रकान्तस्य गुणनिकरो येन चन्द्रकान्तमणिरिव सकलाह्लादहेतुः ।

७४। करवालिनी खड्गिनीत्यर्थे । छन्दोनामापि तथा मतमस्य कवेः । 'वाणिनी'ति बहुषु छन्दोनिबन्धेष्वस्य संज्ञा । करवालिनी धृतखड्गा देवीव सहभवा भवेन शिवेन सहिता ।

७५। गोपीपक्षे पत्रावली चन्दनादिचर्चा सुमनसः पुष्पाणि रत्नानि मणिमाणिक्यादीनि गात्रभूषणानि । कनकरुचिरा सुवर्णेन शोभना स्तनयुगमेव सदुत्कृष्टमुच्चः

अथ पथि तदङ्गनापदमवीक्ष्य सम्भावना-(७६)

मिमामकृत साऽबला हरिरसावुवाहामला।

नितम्बभरमन्थरामिह गतिं दधतीं त्वरां

मतं मुररिपोः पदं किल मञ्जु पृथ्व्यामिदम् ॥८५॥

जहार हरिणेक्षणश्रियमियं भृशं कानने

द्वयोर्नयनयोरथ न्यधित तामशङ्काऽऽनने(७७)।

न चित्रमतिमत्र तद्वितनुते रवे(61b) राजतः

किलाविकलमण्डलाद्दहरदम्बरे राजतः ॥८६॥

अहह हरिणोवाहं मोहं वहे हरिवर्जिता

विलसतितरां सिंहीवेयं हरेः(७८)कृपयोर्जिता।

चिरमिह कुरङ्गासङ्गेनामुना जनतर्जिता

तनुमनुदिनं हीना हास्याम्यथासुखभर्जिता ॥८७॥

---

उन्नतं शिखरं तद्विद्यते यस्याः क्रीड़ाभूमिः केलिस्थलीयम्। प्रविततनितम्बा विशालनितम्बवती। मेरुस्थलीपक्षे पत्राणि वृक्षपत्राणि सुमनसो देवाः। सुवर्णादिरत्नानामाकर एव सुमेरुरिति प्रवादः। जघननितम्बौ पर्वतांशदेशवाचकौ। शिखराणि च पर्वतशृङ्गाणि। स्थली अकृत्रिमा भूमिः। इयमपि गोपी निसर्गरमणीया।

७६। सम्भावनां सत्तायोग्यताम्।

७७। अशङ्का निर्भया तस्करस्वभावत्वेऽपि प्रचण्डसाहसा। आनने तां श्रियं न्यधित न्यासमिव स्थापितवती। 'विलोलदृष्टं हरिणाङ्गनासु चे'ति कविगुरोर्वचनमुपजीव्यैषा भणितिः। अम्बरे आकाशे अविकलमण्डलाद्राजतः शोभमानस्य रवेस्तथाऽखण्डमण्डलात् राजतश्चन्द्रात्। तदाननं राजतोऽपि दीप्तिमत्तरं चन्द्रादप्यधिकतरमाह्लादि। 'जहारे'ति 'अहरदि'ति च तात्पर्यगर्भमाख्यानम्। चित्रमतिं विस्मयसूचकविचिकित्साम्।

७८। अहमभाग्या गोपी कुरङ्गासङ्गेनामुना निन्दितरागेण रहः परकीयारत्या जनतर्जिता लोके तिरस्कृता मूर्च्छामापन्ना मतिभ्रममापन्ना वा। सा च हरेः कृपयोर्जिता ओजस्विनी बलवती। हरिवर्जितेति श्लेषेण मृगी, हरिः सिंहः, कुरङ्गो मृगः।

प्रेक्ष्य प्रेयःप्रपदमवनौ मानमेवाऽऽचचक्षे
मन्दाक्रान्तामिह हरिपदाग्रेण भूमिं निरीक्षे।
नूनं कान्तामतिसुमनसं कर्तुमस्याः प्रियैषी
प्रांशुप्राप्यं कुसुमनिचयश्चारुमुच्चैरचैषीत्(७९) (XV) ॥८८॥

तस्मिन् कुञ्जे कुसुमितलतागुञ्जिरोलम्बपुञ्जे
सा रामा का रुचिरहरिणा भुक्तपत्या निकुञ्जे।
पत्रालीभिः पिककुललयैराकुले पुण्यगम्ये
तज्जीवात्मा मधुरिपुपदं याति चित्तेऽनियम्ये(८०)॥८९॥

यदङ्के क्रीड़न्तीं न भयमविशन्मेघविस्फूर्जितान्मा-
मवाऽऽसीद्दासीयं स्वभवनशिखिक्लेशतो दूषितात्मा(८१)।
विना तं गोविन्दं हृदयमुदयद्वंशनादाद्दिदानीं
स कस्मान्मेऽनङ्गो दहति सहसा योषितोऽस्या न मानी(८२) ॥९०॥

इत्थं तद्भवनेऽभिसारतरला ह्रीषिन्युपेतेऽबलाः
पप्रच्छुर्भवता व्यलोकयत हरेः शार्दूलविक्रीड़ितम्(८३)।
श्रीकृष्णार्पितचेतसामभिभवस्तासां ततो नाभव-
द्दूरादेव पलायितोऽतिभयतो रक्तस्निजं जीवितम् ॥९१॥

---

७९। मानमभिमानमाचचक्षे सूचितवती गिरेति यावत्। यद्द भूमिर्हरिपदाग्रेण आक्रान्ता। अतिसुमनसमतिप्रसन्नचित्तामत्युत्कृष्टैः पुष्पैर्भूषिताम्।

८०। का इति प्रश्ने अथ च अनिर्वचनीयपुण्यमाहात्म्यवती सा रामा या मधुरिपुपदं यातीति योजना।

८१। गोविन्दक्रोड़े क्रीड़न्तीं मां मेघगर्जिताद्भयं नाविशत्। नापीयं दासी मल्लक्षणा स्वभवनशिखिनां वर्षासु तेषां केकारवतः क्लिष्टा उद्वेगिता वाऽऽसीत्।

८२। 'तदानीं' 'मानी'ति नान्त्यानुप्रासभङ्गः शङ्कनीयः। अनुस्वारविसर्गयोगस्या-दूषकत्वमिति चित्रकवीनामाम्नायः।

८३। हरेः श्रीकृष्णस्य अथ च सिंहस्य शार्दूलस्येव विक्रीड़ितम्।

यामादाय प्रयातो हरिरहह रहस्येष्टा **सुवदना**-
रुद्धा(८४) गर्वाद्वादीत् प्रियतम गमने शक्ताऽस्मि न मनाक् ।
बन्धुः स्कन्धेन तस्माद्वहतु [स च] तथेत्युक्त्वा नततरो-
पान्तामारोढुमिच्छुः(62b)सपदि बत विहायान्तर्धिमकरोत्(XVI) ॥६२॥

[अथ] सा हरिं परितो वनानि वनानि तत्र विचिन्वती
बत नव्यपल्लवकोमलावयवाऽबला विरहाधिना(८५) ।
विलसन्नितम्बपयोधराधिकभारमन्थरताऽन्विता
विततान साभिनयं सुधामधुरां हरिप्रिय**गीतिकाम्** ॥६३॥

कान्तेऽथानागतेऽस्मिन् रहसि वरवधूः सापराधाऽनुतप्ता
मोहप्राप्ता श्रिताश्रुप्रकरसरवलन्मौक्तिक**स्रग्धरा**ऽसौ(८६) ।
आलोक्यालीः समाना हरिविरहमहावह्निदण्डं धुनाना
लब्धाश्वासाऽथ ताभिः सहसमभिससाराथ यन्निःसराऽसौ ॥६४॥

कौमुद्या परिकलितं ललितं परिसृत्य मोहतोऽरण्यम् ।
विनिवृत्य कृष्णसख्यः **पथ्यार्या**स्ता जगुः पुण्यम्(८७) ॥६५॥

सर्वासु बल्लवीषु नितरां विरहव्याहदूनचित्तासु ।
**विपुला** कृष्णे करुणाऽऽसीत्तद्वनवर्त्मनो-(63a)ऽयासीत् ॥६६॥

**चपला** काऽपि कृष्णं कटाक्षबाणैर्बिभेद बहु कोपात् ।
मुक्ता च साऽतितृष्णं हरिं परित्यज्य सन्तापात् ॥६७॥

---

८४। यामादाय हरिः प्रयातः सा रहस्येष्टा गोपनसंयोगेऽभिलाषिणी प्रिया।

८५। बतेति खेदे। पादादौ निपातोऽयं न साधुरित्यभियुक्ताः। विरहाधिना विच्छेदार्त्या हेतुना गीतिकां वितताने त्यन्वयः। गीतिकाच्छन्दः। प्राकृतसाहित्ये देशीयभाषासाहित्ये क्वचिच्च देवभाषायामपीदृशीनां गीतीनां सन्दर्भणेन ललिता काव्यसृष्टिरजायतेति सुधियां नातिरोहितम्।

८६। मोहप्राप्ता मूर्च्छिता अश्रुप्रकरसरवलन्मौक्तिकस्रग्धरा नयनजलधाराभिर्मौक्तिकमालारचनानुकारिणी। समानाः समानावस्था मानाभिभूताश्च। महावह्निदण्डमन्मूककल्पम्। 'अयन्ते बाष्पौघस्त्रुटित इव मुक्तामणिसर' इति भवभूतिपद्येऽप्येवं भणितम्।

८७। कौमुद्या शारदीयचन्द्रिकया परिकलितं व्याप्तम्। मोहतो विरहकृतमूर्च्छाजनितसंज्ञालोपात्। कृष्ण एव सखा समप्राणत्वेन श्रेष्ठो यासां ताः। पथि व्रजमार्गे। श्लोकोऽयमार्यायाः पथ्यात्वेन संज्ञितो भेदः।

काचित् स्मितं [वितेने] हरिं निरीक्ष्य पुरो रामा।
**मुखचपला** सा मधुरं वाचमवोचद् बलत्कामा(८८) ॥९८॥
तद्रससरसाभाषणपूर्वमरीरमदुदारगुणशीला।
पुरुषायितेऽथ विष्णोश्चकार तोषं **जघनचपला**(८९) ॥९९॥
रासे हरिरिह मोहनगीतं स जगाव[थ] धृतिराकलिता।
इयमथ सुधेव **गीति**र्मन्मथबलदीपनाय बहु जाता ॥१००॥
मधुरिपुगीतरसायनघनपानसमुल्लसच्छक्तेः।
कामिन्या**मुपगीति**स्तस्य विनोदं दधे रक्तेः(९०) ॥१०१॥
**उद्गीतिं** बत विष्णोः श्रुत्वा(९१) देवाङ्गना मुग्धाः(XVII)।
रासक्रीड़ादर्शनमनोरथादिह समागता मुग्धाः ॥१०२॥
अथ रासे रसमस्य त्रिदशेशो दिवि निरीक्ष्य विलसन्तीभिः।
सुरभिकुसुमनिकरेण(63b)तमतोषयत् सुरवधूपहा**र्यगीतिः** ॥१०३॥
इति विजहार हरी रमणीभिर्वरतरुणीमूर्धमणीभिः(९२)।
मदनसमुद्धतयेऽतरुणीभिः प्रवरकरीव समं करिणीभिः(XVIII) ॥१०४॥

---

८८। मुखचपला मुखरा। आर्याया भेदश्च मुखचपला। वलन् स्फुरन् कामः प्रियसंयोगाभिलाषो यस्याः सा।

८९। पुरुषायितरतोत्साहवती अत एव जघनचपलेयम्। तदिति हेतुनिर्देशः। रसेन प्रीत्या सरसाभाषणपूर्वं मधुरालापसहितमरीरमदिति योजना।

९०। प्रथमार्धे समस्तपदं रक्तेरित्यस्यान्तिमपदस्य विशेषणम्। कामिन्यां गोपीसामान्ये विषये जातावेकवचनम्। उपगीतिः पूर्वगीतेरुपरि उपसमीपेऽव्यवहितोत्तरकाले श्रीकृष्णविहिताऽतिरिक्ता गीतिरिति यावत्। उच्चैर्गीतेतीयमुद्गीतिरपि यथाऽनन्तरे पद्ये।

९१। उच्चैरुच्चरितां कृष्णप्रशस्तिं श्रुत्वा मुग्धा मोहिता अथच मुग्धा मध्याप्रलम्भयोर्विलक्षणा देवाङ्गनाः।

९२। मणिशब्दोऽस्त्रियामिति कोषः। तेन स्त्रियां 'कृदिकारादक्तिन' इति गणसूत्राद्वैकल्पिकं दीर्घत्वं यथा 'मनोहरमणीरमणीयमुच्चै'रिति नैषधे। 'वरतरुणीलग्नमूर्धमभिमि'रित्यसङ्गतः पाठो मातृकालिपौ।

अथ सलिले विहर्तुं मनोभि-
युवतीभिरिष्टसरित्सुमनोभिः(९३)।
सममुना यमुनाऽवजगाहे
विहतविषाऽऽस्त महाभुजगाहे(XIX) ॥१०५॥

अमलकलिन्दसुताजलपूरे
लसति वधूषु हरौ रतिपूरे।
नभसि शशिन्युरुसंसदि शोभा
क्षितिवियती समपूरि दिशो भा(९४) ॥१०६॥

तरलतरङ्गभुजा यमुनाऽथा-
विरतरतोत्कतया हरिनाथा।
अतिसरसस्फुटकैरवहास्या
हरिरुपमा बहुमानवहाऽस्याः(९५) ॥१०७॥

आलिङ्गितास्तैर्यमुनातरङ्गैः
कृताच्युतालिङ्गनजातरङ्गैः।
सस्नेहमेताः स्तिमिताः समानी-
कृता नहीर्ष्याऽभ्यभवत्तदानीम्(९६) ॥१०८॥

---

९३। इष्टा सरित् यमुना। तत्र पुष्पाभेदेन रूपिता युवतयः। महाभुजस्याजानुलम्बितभुजस्य महापुरुषस्य श्रीकृष्णस्य गाहे जलावगाहनेनेति यावत्। वैवक्षिकी विभक्तिरिति सप्तमी सोढ़व्या। एतावत्पर्यन्तमार्यागीतिच्छन्दः।

९४। क्षितिवियती आकाशे तथा व्रजविपिने च दिशो भा दिशो दीप्तिः समपूरि सम्पूर्णाऽऽसीत्। अत्रानन्तरे च पद्ये शोभेति वृत्तसंज्ञा—ललितपदेत्यन्यत्र नाम। 'ललितपदा भरतस्य नजौ ज्यावि'ति जयकीर्त्तिः। 'क्षितिवियती' इत्यत्रात्यन्तसंयोगे द्वितीया।

९५। उपमा उपमास्थलमुपमानम्।

९६। ईर्ष्या तदानीं नाभ्यभवदित्यन्वयः।

वरमम्बरमम्बरभावमितं
स्तिमितं स्तनयोर्नवभावमितम् ।
रुचिरं(९७) रुचिरञ्जनसंवलिता
प्रतिबिम्बनया सरसं वलिता ॥१०९॥

कलिन्दजायां जलकेलिकाले
नभोविलम्ब्यम्बुदबिन्दुजाले ।
मुक्तावलीभूषितचारुकाया
द्यौरेव किं केलिविलोकिकाऽऽयात्(९८) ॥११०॥

कालिन्द्यपःकान्तिसमानकाय-
कान्ति(९९) हरिं तत्र विनिश्चिकाय ।
गोपीगणं पङ्कजतुल्यनेत्र-
विलासचिह्नैर्जलखेलनेऽत्र(१००) ॥१११॥

दिनकरतनयाऽतिनिर्मलाम्भः-
प्रकरमनु प्रतिबिम्बिताः स्त्रियस्ताः ।

---

९७। रुचिरं रुचिरस्ततीति मा. पाठः। स्तनयोर्नवभावमितमपूर्वदीप्त्योद्भासितं रुचिरं स्तिमितं स्थिरमम्बरमाकाशमम्बरभावं वस्त्रतामितं नीलत्वात्। रुच्या रञ्जनेन रागेण च तरङ्गरूपेण संवलिता। अन्यकर्तृकोऽभिलाषो रुचिः स्वहृदयवृत्ती रस इति विवेकः।

९८। विलोलमायादिति मां. पाठः। केलिविलोलं श्रीकृष्णं किं द्यौरायात् सङ्गतवतीति वितर्कः। केलिविलोकिकेति क्रीडाविलोकनावश्यकव्यापारवतीत्यर्थः। अयमेव साधीयान् पाठः।

९९। कालिन्द्यपसां कान्तिः, अपःपदं जलपर्यायम्। 'आपः अप' इति द्विरूपकोषे। 'दैके आपः कर्माख्याया'मिति ह्रस्वो नुट् च। 'उदकेनुम्भौ च' इत्युणादिसूत्रेण। चकारात् क्वचिन्न इति आप् धातोः असुन् प्रत्ययः। यमुनाजलानां कान्त्या समाना कायकान्तिर्देहद्युतिर्यस्य तं हरिम्।

१००। जलखेलनं जलकेलिः तच्च शृङ्गाराङ्गेन सर्गबन्धेषु प्रायशो वर्णितम्। नेत्रविलासचिह्नैः कटाक्षपातरूपैर्लिङ्गैः—इत्थम्भूतलक्षणे तृतीया। 'किं तावत् सरसि सरोजमेत-दारा'दित्यादि माघपद्यमुपजीव्य रचितोऽयं श्लोकः। तत्र श्लोके विब्बोकैर्विलासैरित्यर्थ इति वल्लभमल्लिनाथयोर्व्याख्यानम्। उभयत्र निश्चयान्तसन्देहोऽलङ्कारः।

हरिपरिचरणाय चारुकाय-
प्रचयमिवादधिरे तपःप्रशस्ताः ॥११२॥

कृष्णातिकेलिकलनात् प्रमदासु तासु
शीत्कारकम्पपुलकादिसमन्वितासु ।
कृष्णाऽतिकेलिकलनात् पुनरुक्तिमाप(१०१)
शीत्कारकम्पपुलकान्नु लिहानमापः(XX) ॥११३॥

अथ करतलताडनेन नाना-
जलमयतुङ्गकुचा विराजमाना ।
बहलघनरसाञ्जना स्वदेव-
प्रियसरिदौज्झि(१०२)वधूभिरीर्ष्ययेव ॥११४॥

दुःखितासु तरुणीषु(64b)मुरारि-
स्तूर्णमेव विजहार परारि(१०३) ।

---

१०१। कृष्णेन सहातिशयितक्रीड़ासम्पादनात् तासु प्रमदासु गोपीषु शीत्काररूपसात्त्विकभावसमन्वितासु कृष्णा यमुना नदी शीत्कारादीन् स्वाङ्के धारयन्ती पुनरुक्तिमाप । कृष्णा यमुनाऽर्थात्तद्वारि पुनः शीत्कारकम्पपुलकान् लिहानमास्वादयत् समन्तात् पुनरुक्तिमाप वाचालतां प्राप अत्युच्छलितमभूदित्यर्थः । नु वितर्कं । अतिकेलिकलनादुद्दामक्रीड़ावशात् पुनरुक्तिं कृष्णतरत्वं कृष्णप्रेयस्त्वञ्चेति मिषात् प्रौढ़ोक्तिः । भ्रमराः कृष्णवर्णाः, कृष्णोऽपि तथा । तेन कृष्णवर्णस्य बाहुल्यं जातम् । अति के अत्यर्थं जलेऽलिकलनात् नारीणां देहसौरभाकृष्टानां भ्रमराणां वेष्टनात् । तथा च भागवते "ततश्च कृष्णोपवने जलस्थलप्रसूनगन्धानिलजुष्टदिक्तटे । चचार भृङ्गप्रमदागणावृतो यथा मदच्युद्द्विरदः करेणुभि"रिति ।

१०२। स्वदेवप्रियसरित् कृष्णप्रिया नदी यमुनाऽपि कृष्णेनोपभुक्तेत्यालोक्य तस्या कृष्णनायिकाभावमुपलभ्य गोप्योऽसहिष्णुतया तां तदा जहौ इति प्रौढिः । बहलघनरसाञ्जना प्रचुरघनरसेन चन्दनसान्द्रनिर्यासेन अञ्जनमभ्यङ्गतया सम्यक् म्रक्षणम् यस्याः सा । 'पुंलिङ्गः स्याद् घनरसः सान्द्रनिर्यासनीरयो'रिति रभसः ।

१०३। परारि पूर्वतरस्मिन् वर्षे । कात्यायनीव्रतं पूर्वतरे वर्षे हेमन्ते मासि याभिश्चरितं ताभिरत्र रासेऽपि मेलनं जातम् । 'याताबला व्रजं सिद्धा मयेमा रंस्यथ क्षपा' इति निर्देशात् । पुराणप्रवीणस्य कवेर्नेदमयथार्थं कालकल्पनम् ।

तद्गुणैः स हि सदैव विकृष्टः
सत्कृतानुगमनेऽभिनिविष्टः(१०४) ॥११५॥

पृथ्वीजलानलसमीरनभःसमानः
स्वात्मावबोधधुतकारकताऽभिमानः ।
गोपाङ्गनाकृततपःप्रचयप्रयुक्तः
केलीश्चकार हरिरेव तु नित्यमुक्तः(१०५) ॥११६॥

क्रीडामध्ये नवघनरुचिस्तीक्ष्णशृङ्गो नतास्यः
कृष्णं हन्तुं दितिजवृषभो(१०६) धृष्ट आयादरिष्टः ।
शृङ्गं धृत्वा स्तिमितपटवत् कण्ठमापीड्य तस्य
श्रीकृष्णस्तं मुररिपुररं हेलयैवावधिष्ट(XXI) ॥११७॥

इति **हरिचरिता**ख्ये नव्यसत्काव्यमुख्ये
प्रसरदमृतधारे वर्णितेशावतारे ।
कृतकलुषनिरासे तुष्टबालाविलासे
**दशम** उरुविशेषश्छन्दसां सर्ग एषः ॥

---

१०४। सत्कृतः सत्कारः परिचर्येति यावत् । तस्यानुगमने तद्विधानेऽभिनिविष्टोऽवहितः ।

१०५। पृथ्वीत्यादि पञ्चभूतात्मक इति यावत् 'क्रीडनेनेह देहभागि'ति भागवते । अथच स्वात्मेति सम्यक् निर्लेपो नित्यमुक्तत्वात् । गोपाङ्गनेति रासविलासप्रकरणे हेतुगर्भं विशेषणं हरेर्भगवतः । गोप्यस्तु रसिकमण्डलशेखरेण श्रीकृष्णेन रसविधावयतारिताः स्वांशभूता इति भक्तानां रहस्योद्घोषणं—'क्रीडितं तत लोकानुग्रहहेतोः केवलमवनौ प्रकाशमायात'मिति वैष्णवाग्रगण्याः कविरसिकाः ।

१०६। दितिजवृषभो दैत्यप्रधानोऽरिष्टासुरः 'अरिष्टो वृषभासुर' इति भागवतवर्णनात् । वृषाकृतिरसाविति पौराणिकाः । अरमलम् । अरमिति हेलयैवेत्यन्तर्भूतवध-क्रियाया विशेषणम् ।

# हरिचरितम्

## एकादशः सर्गः

अथाङ्घ्रिघाताच्छकटे निपातिते बालग्रहे च स्तनपानघातिते।
भग्नेऽतितुङ्गेऽर्जुनभूरुहद्वये कीलालकेलौ(१)दमिते तु कालिये ॥१॥
वत्से बके धेनुक उद्धते हते शैले(65a)धृतेऽरिष्टवृके क्षयं गते।
शशंस कंसं किल नारदः स्वयं शौरिर्हरिं नन्दगृहं पुराऽनयत्(।) (२) ॥२॥
युग्मकम्।
वृत्तान्तमेतं निखिलेन शुश्रुवान् कंसो भृशं रोषमसावुपेयिवान्।
मेने द्रुतं रामहरी स्वरावणौ(३) वध्यावसाध्यौ परमूढयौवनौ ॥३॥
आनाय्य संसद्यथ सर्वयादवा-नसाववादीद्वसुदेवमुग्रवाक्।
भवानवाधारि मया महासुहृत् वन्धश्च शूली हरवन्नु चारुकृत्(।) (४) ।४॥

---

१। निपातिते घातिते बालग्रहे शिशुनाशके शिशुघ्न्यां पूतनायामिति यावत्। कीलालकेलौ जलक्रीड़ाव्यापारे। 'पयः कीलालममृत'मित्यमरः। वंशस्थबिलमिन्द्रवंशया मिश्रणादुपजातिर्वा पारिभाषिकी मुख्यं छन्दोऽत्र सर्गे।

२। अरिष्टवृके अरिष्टरूपे वृकासुरे। पुराऽनयत् 'पुरा'शब्दयोगे भूतानद्यतने लङ् यथा प्राप्तं पक्षे लुङ् लट् चेति व्याकरणानुशासनम्। पुराऽनयदिति शशंसेति 'इति' पदाध्याहारो वाक्यासाधुत्वनिरासाय।

३। स्वस्यात्मनः रावणौ दुःखसूचकक्रन्दनात्मकशब्दविधायकौ। 'रावणो लोकरावण' इति रामायणादिषु दर्शनात्। निजमृत्युनिमित्ताविति भावविनिवेदनम्।

४। मया प्रागवधारितं भवान् मम परमं मित्रं वन्द्यश्चेति। परन्तु फलेन ज्ञायते यत् त्वं शूली शूलधारी हर इव 'नु' सम्भावनायां वितर्के चारुकृत मङ्गलविधातकः। शत्रुरेव तत्र न संशयः। परन्तु सुहृदिति सदैवानुमतत्वसूचनाशयेन। श्लेषेण महत् यथा स्यात्तथा सुहृत् प्राणनाशकोऽपि। एवं चारुकृदित्यत्रापि कृन्, कृतिधात्वोर्विपरीतार्थयोरुपयोगः।

गोत्रं भिनत्स्याशु यमोऽसि चान्तकः कुलस्य रक्षस्त्वमलं जलेश्वरः ।
प्रभञ्जनः श्रीमदसीशताऽऽशया कंसं जिघांसस्यथ किं नरेश्वरः(५) ॥५॥
तमेवमुक्त्वा विषवर्षिणीर्गिरः क्रूरोऽयमक्रूरमुवाच निष्ठुरः ।
विरुद्धमारोपितमित्रभावकं तदेव चिन्ताऽऽत्मकभाऽभिभावकम्(६) ॥६॥
श्वफल्कपुत्रत्वमरेऽत्र संसदि प्रतेयमक्रूरमहं न तद्यदि(७) ।
त्वं सार्थकं वाञ्छसि सर्वदा मया समं सखित्वञ्च चल व्रजं रयात् ॥७॥
पयोनिधिं वाड़व-(65b)कालकूटव-न्मां रामकृष्णाववलम्ब्य कूटवत्(८) ।
दिने दिने तापयतः कदम्बकं ममातिमात्रं जलधेर्विड़म्बकम्(९) ॥८॥

---

५। गोत्रं भिनत्सि—श्लेषेण पर्वतभेदी पूर्वदिक्पाल इन्द्रः अथच आत्मीयानां भेदं विदधासि। अन्तको यमोऽसि दक्षिणदिक्पालः अथच सर्वनाशहेतुः। कुलस्य रक्षः नैऋतश्चन्नामा विदिक्पाल अथच कुलघाती राक्षस इव गर्ह्यो भयनिदानञ्च। त्वं जलेश्वरो वरुणः पश्चिमदिक्पतिः, अथच जलानां जड़ानां मूर्खाणामीश्वरः, डलयोर्व्यत्ययो बहुलम्। प्रभञ्जनो वायुर्विदिक्पतिः अथच प्रकृष्टरूपेण मत्पक्षभङ्गकारी। ईशताऽऽशया ईशरूपेण प्रयासेन विदिशःपतिरीशानः, अथच स्वप्रभुत्वाशया श्रीमद् यथा स्यात्तथाऽसि। किन्नरेश्वरः कुबेर उत्तरदिक्पालः, अथच किं नरेश्वर इति च्छेदः—त्वमेवाधिपतिर्जनानां नाहमिति संशयकारकः।

६। यदारोपितमित्रभावकं कृत्रिममैत्रीप्रदर्शकं विरुद्धं विरोधः भावे क्तः तदेव चिन्ताऽऽत्मकभा चिन्तारूपेण चित्तालोड़नरूपेण प्रकाशनं तस्याभिभावकमा-पाततो न्यक्करणकल्पम्। अतएव निष्ठुर इति कंसस्य विशेषणोपयोगः।

७। श्वफल्क इत्यक्रूरपितुर्नाम। अथवा यदि न यथा वद्देवबृत्तं यदि न ततताहशं तदा त्वां श्वफल्कपुत्रत्वसदृशमक्रूरं सरलतयैव त्वन्नामोचितमस्मत्सगोत्रोचितं चेत् सर्वदा वाञ्छसि मया सहाव्याहतं सख्यञ्च वाञ्छसि तदा रयात् तूर्णं व्रजं चलेति योजना।

८। मामवलम्ब्य समाश्रितौ मम भागिनेयत्वेनेति यावत्। वाड़वकालकूटवत् वाड़वाग्निविषवत् तौ दिने दिने तापयतः। मामिति काकाक्षिगोलकवदुभय-सम्बद्धम्।

९। जलधेर्मम समुद्रस्थानीयस्य मम कूटवत् कदम्बकं सर्षपवत्तुच्छं 'कदम्बं निकुरम्बं स्यान्नीपसर्षपयोः पुमानि'ति मेदिनी। कदम्बमेव कदम्बकं स्वार्थिकः कप्।

तौ तत्र गत्वा नय(१०) मे सुवध्यतां प्राप्ताविमौ नागवरेण मुह्यताम् ।
मुनिप्रकाण्डैर्मम मृत्युदीक्षितौ मत्वा पितृभ्यां सह संसदीक्षितौ ॥९॥
कृत्याप्रपञ्चेन परां चतुर्दशी-महं(११) करिष्यामि धनुर्महं वशी ।
तदर्थमत्रानय सर्वबल्लवान् द्रुतं सनन्दान् सहराम केशवान्(III) ॥१०॥
दधीनि सर्पींषि च माहिषाणि मे प्रेयांसि भूयांसि समानयन्त्विमे ।
अन्यानि चान्यानि बहून्युपायना-न्यासज्य(१२)भोज्याय ममानुशासनात्(IV) ॥११॥
श्वाफल्किरित्यात्तनृपानुशासनः प्रातिष्ठताभीष्टमुकुन्ददर्शनः ।
तदैव कंसः प्रजिघाय केशिने दूतं स वृन्दावननित्यवासिने(V) ॥१२॥
कृष्णं निहन्तुं स तु कंसवाक्यत-स्ततः प्रतस्थे तुरगो बलोद्धतः ।
विदारयन् भूमितलं खुरैः खरै-रुत्सारयन्(66a)मेघचयञ्च केशरैः ॥१३॥
प्लवद्रुतोल्लङ्घितपुष्पवत्पथः(१३)स भीषयन् सन्ततहेषितैरथ ।
वक्त्रं विवृण्वन् प्रजनेच्छयाऽग्रतः कृष्णं ययौ दत्तविभावितोऽग्रतः(१४) ॥१४॥

---

कूटवन्मायावि चेति श्लेषेण । तत् द्वन्द्वात्मकसमवायरूपं द्वन्द्वमतिमात्रं विडम्बकं कदर्थकमिति भावः ।

१० । तत्र गत्वा तौ नय । ततो नागवरेण कुवलयापीडहस्तिना सुवध्यतां प्राप्तौ तौ मुह्यतां मोहय । लोड्मध्यमपुरुषैकवचनम् । मुनिप्रकाण्डैर्नारदेन-गौरवे बहुवचनम् । ततपितृभ्यां च संसदि तौ मृत्युपथमाप्तौ ईक्षितौ एकत्र दिव्यदृष्ट्या अपरत्र तथा स्यातामित्याशंसया । मुनिप्रकाण्डैरिति पदं काण्डवत् प्रकाण्डपदस्य तद्धितप्रत्यय-कल्पनेन समर्थनीयम् । मम मृत्युदीक्षितौ मम मृत्युसाधनाय धृतव्रतौ ।

११ । परामागामिनीं चतुर्दशीं चतुर्दशीयोगिनं तिथ्यंशं व्याप्य कृत्याप्रपञ्चेनाभिचारतन्त्र-प्रक्रियाविस्तरेण धनुर्महं धनुर्यज्ञं करिष्यामि । चतुर्दशी चाभिचारे उक्ता तिथिः ।

१२ । आसज्य व्रजादितस्ततो मदर्थं समाहृत्य ।

१३ । प्लुवद्रुतेन द्रुतप्लुतेन रथवेगेनोल्लङ्घितः पुष्पवान् लक्षणया फलकुसुमादिबहुलः पन्था ग्राममार्गो येन ।

१४ । दत्ता विभाविता स्वकीयोत्साहादिप्रभुशक्तिर्यस्मै यद्वा दत्तः दानादिभिरभ्यर्थितः विभावितः विशेषेण सम्भावितश्च । विशेषणयोः कर्मधारयः । पूर्वकल्पे विभावो विद्यते यस्येति विभावी तद्भावस्तत्ता ।

दृष्ट्वा तमायान्तमनन्तविक्रम(१५)-मुरो भुजं न्यस्य यथावसम्भ्रमः।
आभोगिनं कृष्णभुजं स जग्रसे तार्क्ष्यो यथा कालभुजङ्गमं(VI)रसेत्(१६) ॥१५॥
हरेर्भुजः केशिगले व्यवर्धत व्याधिर्यथाऽसम्भवनादुपेक्षितः(१७)।
कायस्य नाशाय स केशिनो रदा-नुत्पाटयामास समन्ततस्तदा ॥१६॥
विवर्धमानेन मुकुन्दबाहुना केशी तदा व्याकुलितः कृतोऽमुना(१८)।
विनिःसृताक्षश्चरणान् क्षिपन् क्षणा-न्निर्यत्न(१९)आसीत् विसृजन्नसृङ्मनाक् ॥१७॥
पचेलिमा कर्कटिकेव(२०) तत्तनु-र्द्विधाऽभवत् कृष्ण-(66b)भुजोद्भवाद्नु।
एकाक्षिनासाश्रवणे द्विपादके अर्धभुजावर्ध-(२१)शिरोऽर्धपुच्छके(VII) ॥१८॥
इत्थं हते केशिनि तत्र नारदः कृष्णं घनोद्यान्तरितो मुदाऽवदत्।
वित्तोऽमुना केशिवधेन केशव-स्त्वमस्यलं ब्रह्मशिवान्वयादिव(२२) ॥१९॥

---

१५। विक्रमेति पादान्ते ह्रस्वता दुष्टेति प्राचीनानामर्वाग्भवानां चालङ्कारिकाणां मते।

१६। तार्क्ष्यो गरुडो यथा कालभुजङ्गमं विषमविषोल्बणं कृष्णसर्पादिकं रसेत् भक्षयेत्। रस आस्वादने धातुः।

१७। असम्भवनादसम्भावनया अवज्ञया व्याधिर्यथा कायस्य ध्वंसाय वर्धते तथेति पूर्वार्धेन योजना।

१८। अमुनेति दूरप्रसारित्वाददूरवर्तित्वनिर्देशेनान्वर्थं सर्वनाम। व्याकुलितः कृतो व्याकुलीकृत इत्यभूततद्भावसूचनम्।

१९। निर्यत्न आयाततो मृतकल्प इति यावत्। विनिःसृतानि शारीरस्पन्दनादि-प्रयासरहितं निष्कासितानि अक्षीणि नयनगोलकानि यस्येति।

२०। पचेलिमा इत्यनेनायाससिद्धत्वसूचने शीलार्थे केलिमच् कृत्यप्रत्ययः।

२१। कृष्णभुजोद्भवात् कृष्णबाहुबलोत्थादाक्रमणात्। द्विपादके अर्वे ईदूदेतो 'द्विवचन-स्ये'ति सन्धिप्रतिषेधः। एवमपि विष्णुपुराणवर्णने—द्विपादपुच्छपृष्ठार्धश्रवणैकाक्षि-नासिके। केशिनस्ते द्विधाभूते शकले द्वे विरेजतुः॥ तथा च तत्रत्या रत्नकण्ठटीका—द्वौ द्वौ पादौ ययोः पुच्छपृष्ठे अर्धरूपे ययोः। 'एक'शब्दः श्रवण-शब्दात् प्राग्योज्यते, तेनैकैके श्रवणाक्षिणी एकैका नासिका ययोस्ते—इति।

२२। एवं मा. लि. पाठः। त्वं ब्रह्मशिवसद्वयोगेन यथा शोभसे तथाऽद्य दुर्जय-केशिवधेनेति वित्तः प्रसिद्धः। एवं कल्पितसादृश्ययोरर्थः। वस्तुतस्तु 'केशव'पदस्य निर्वचनप्रयासेन 'केशि'शब्देन तस्य निरुक्तभाषायामिव योगश्चाभिव्यज्यते।

दैत्यस्य तस्याद्भुतकेशरात् सुरा रणे दूरं द्राङ्नितरां प्रपेदिरे (VIII)।
श्रुत्वाऽस्य हेषामतिमात्रकम्पिताः पलायनेऽग्रेऽपसृतान् (२३)प्रचक्रिरे ॥२०॥

बहूनि बाहौ तव यानि केशिनः क्षतानि दन्तैः प्रतिभान्ति तानि नः।
स्तम्भे महामारकते समज्ञया प्रशस्तयस्ते(२४)लिखिता महोदयाः ॥२१॥

निरीक्ष्य हेलाकृतवासवाजिना मुदं तवेमां दितिजेन वाजिना(२५)।
प्रीतोऽस्मि कंसे निहते समागम-(२६)स्त्वया परश्वो(२७) भविता(67a) पुनर्मम(IX) ॥२२॥

मुदैवमाभाष्य जगाम नारदः कृष्णस्तुतेः स्वस्त्ययने विशारदः।
तत्राभितः सत्कुसुमैः सदैवतैर्-गोपैर्मुकुन्दो मुमुदे(२८) सदैव तैः ॥२३॥

श्वफल्कपुत्रोऽपि रथेन भास्वता पुर्या विनिर्याय रयेण भास्वता।
चित्तं हरीक्षोत्कलिकाभिराकुलं वहन् जगामाशु स नन्दगोकुलम् ॥२४॥

---

२३। अग्रे प्रथमं पलायने अपसृतान् स्वापसारणरूपचेष्टायुतान्। लिट्प्रयोगद्वयेन तस्य दैत्यस्यातीते सामर्थ्यं प्रकटयता वर्त्तमाने तल्लोपः सूचितः।

२४। समज्ञया कीर्त्या साधनेनेति करणत्वख्यापनम्। कीर्तिस्ते प्रशस्तिं लिखतीति महाप्रभावस्य भगवतः कृष्णस्य बलमहिमा सूचितः। एवं कविप्रौढ़िः। प्रशस्तिरपि स्तम्भेषु लिखिता महोदया सौभाग्यसूचिका स्यात्। मरकतसदृशे कृष्णबाहौ केशिदैत्यकृता व्रणाः प्रशस्तय इव भान्ति।

२५। हे हे(he)लाकृवासव हे न्यक्कृतेन्द्र इति सम्बोधनम्। वाजिना दितिजेन अश्वस्वरूपिणा केशिदैत्येन सह आजिना युद्धेन तवेमां मुदमानन्दमयीं लीलाम्।

२६। परश्व इति कालनिर्देशः पुराणाख्यानानुमोदितः। तथा च विष्णुपुराणे (५।१८।१०) 'त्रिरात्राभ्यन्तरे कंसं निहनिष्यामीति सानुगम्।' इति भगवद्वचनम्।

२७। श्लोकद्वये चासकृन्मुद्धातुप्रकृतेरुपयोगोऽनवीकृततादोषमुत्थापयतीत्यालङ्कारिकपुरोभागाः।

२८। भास्वता दीप्तिशालिना रथेन। भास्वता सूर्यसम्बन्धिना तदनुकारिणेति यावत् रयेण वेगेन। एवं समर्थकसमर्थनम्।

स चिन्तयामास मया समो नरः कोऽन्योऽस्ति धन्यो धरणीतलेऽपरः ।
अंशावतीर्णस्य(२९)हरेर्मुखाम्बुजं द्रक्ष्यामि यो भागवतो(३०)गतो व्रजम् ॥२५॥
फलं ममाद्य श्रितमत्र जन्मनः प्रत्यूषसि प्रीतिमिहाभजन्मनः(X) ।
मुखं यदुन्निद्रसरोजलोचनं(३१) द्रक्ष्यामि विष्णोर्भवबन्धमोचनम् ॥२६॥
वेदास्तदङ्गान्वियता विनिर्ययु-रसंस्कृता देवमुदे मुनीन् ययुः ।
तद्द्रक्ष्यते विश्वगुरोर्मया मुखं सम्प्राप्स्यते ब्रह्मसमं महत् सुखम्(XI) ॥२७॥
शतेन यज्ञैर्यमधोज्य वासवः स्वाराज्यमायादथ सम्मतासवः(३२) ।
योगेश्वरं(67b) स्वामविभाव्य निर्वृतिं नायुस्तमालोकयिताऽस्मि सद्गतिम् ॥२८॥
यो वाऽऽजिमूर्ध्नां मधुकैटभावुभौ जित्वाऽऽदिदैत्यौ प्रलयाम्बुधौ बभौ ।
तन्नीतवेदानददात् स्वयम्भवे स एव कृष्णो ऽवत(३३) तारणो भवे ॥२९॥

---

२९ । विष्णुपुराणे (५।१।२) 'अंशावतारो ब्रह्मर्षे योऽयं यदुकुलोद्भवः' । तथा ५।१।३४ पद्ययोरपि, 'विष्णोर्वीर्याणि शंस'ति इति दशमस्कन्धावतरकायां परीक्षित्प्रश्नः । एवं तत्र १०।१८।४१ पद्ययोः । तथा तत्रांशेनावतीर्णस्य इति च भागवते श्रीकृष्ण-प्रादुर्भाववर्णने । गौड़ीयवैष्णवास्त्वत्रान्यथेदं प्रकल्पय । यथा तोषण्यां श्रीसनातनमिश्रास्तदनुसारिणः श्रीजीवगोस्वामिपादा अपि । एवमपि श्रीचैतन्यमहाप्रभुमतानुसारिणः श्रीनाथचक्रवर्तिनः स्वकृतभागवतव्याख्यायां चैतन्यमतमञ्जूषाख्यायां 'अंशनेति-अंशानां समूहोऽंशस्तेन सह सर्वैरंशैरित्यर्थः' । इत्यादिव्याख्यानपराः ।

३० । भागवतो भगवति भक्तियुक्तः ।

३१ । उन्निद्रसरोजलोचनं विकसितपद्मसुन्दनयनम् । 'उन्निद्र'पदं गौणवृत्तिव्यपाश्रयत्वात् विकशितत्वमाह । तदाश्रयाच्च सौकुमार्यातिशयं व्यनक्ति यथा 'मुखं विकसितस्मित'मित्यादि मम्मटाचार्यधृते पद्ये ।

३२ । सम्मतानां साधुत्वेन गणितानामसवः प्राणा इन्द्रियवृत्तय इति लक्षणया । योगेश्वरं यमविभाव्य स्वांनिर्वृतिं स्वरूपतः शान्तिं न आपुरित्यन्वयः । आपुरित्याप्नुवन्तीत्यर्थे प्रयोगः । एवमभिज्ञानां दर्शनानि लिपिबद्धानीत्यतीतकालतासमर्थनम् ।

३३ । 'एव' 'बत' इति निपातद्वयप्रयोगो न हृद्यः । स एवेति नान्यः । बतेत्युपलब्धिप्रामाण्यपरः ।

यो मीनमूर्त्तिः प्रलये महोदधौ वेदान् समादाय वहित्रवद्दधौ ।
वहन् महोन्तिष्ठति पृष्ठसंस्थिता-ङ्कूर्मः स कृष्णोऽजनि धर्मरक्षिता ॥३०॥
यः पद्मिनीपत्रमिवातिपङ्किल-न्दन्तेन कान्त्या हसतोडुपं किल ।
लक्ष्मेव [साक्षा]द्दधृताम्बुधेः क्षितिं क्रोड़ः स जज्ञे विदधद्रिपुक्षितिम्(३४) ॥३१॥
पञ्चाननः पञ्चजनस्तथाऽर्थतः(३५)सम्भूय यो मेरुरिव व्यवर्धत ।
हिरण्यपूर्वं कशिपुं ततो न्यहन् सम्यङ् नरं तं हरिमीश याम्यहम् ॥३२॥
विद्यासु योऽष्टादशसु स्वयं पटु-र्यज्ञे निजग्राह सकृद्द्विजो वटुः ।
बलेस्त्रिलोकीमहरच्छलाद्दलं स्वजन्मनाऽसावपुनाद् यदोः कुलम् ॥३३॥
त्रिःसप्तकृत्वो बहुबाहुजन्मना-न्भयं विधायानयद-(68a)श्रमं मनाक्(३६) ।
भूभारसंहारपरो भृगूद्वहः स लक्ष्यतेऽत्राद्य हरिर्मया सह ॥३४॥
मृड़स्य कोदण्डमखण्डि लीलया येनाश्मभिः सिन्धुरबन्धि हेलया ।
अत्रान्यमोघेन शरेण रावणः सोऽङ्गं मम स्प्रक्ष्यति पङ्कजेक्षणः ॥३५॥
विश्वम्भरां यं शिरसा बिभर्त्त्यजः श्रियं श्रयन्तीमसिताम्बुजस्रजः ।
सोऽसावनन्तो जगतीस्थितेः कृते बतावतीर्णोऽत्र मया निरीक्ष्यते(३७) ॥३६॥

---

३४। रिपुक्षिति शत्रुक्षयम्। उडुपं हसता चन्द्रद्युतेरभिभावकेन दन्तेन किलेत्यैतिह्यस्पृष्टेन। 'वसति दशनशिखरे धरणी तव लग्ना शशिनि कलङ्ककलेव निमग्ने'ति गीतगोविन्दवर्णनमत्रोपजीव्यते। नैषधकाव्ये २१शो सर्गे नलकृत-हरिस्तुतिर्गीतगोविन्दे भगवद्दशावतारप्रशस्तिश्चात्र प्रकरणे (२९-३७) कविनाऽनुसृता। परं कलेरप्रसक्तेर्नोद्देशः कृतः कविना कल्केः। तत्स्थाने २९ तमे पद्ये श्रीहरेर्मधुसूदनस्य प्रशस्तिः। आख्यानवस्तुनि विष्णुपुराणादौ चावतावाणामुद्देशः करेर्मर्शप्रदर्शकः।

३५। पञ्चाननः सिंहः तथा पञ्चजन. प्राकृतनरः। नरसिंहरूपोऽपीत्याशयः।

३६। बहूनां बाहुजन्मनां क्षत्रियाणाम्। अश्रमम्मनायासेनाऽनयदयं भूभारसंहारपरः। अश्रममित्यन्तर्भूतहधार्योगेन क्रियाविशेषणम्।

३७। अत्रानन्तपदेन शेषमूतेः सङ्कर्षणपराह्वयस्यः बलरामस्य ग्रहणं यथा मवधे तावकापरतनोः सितवेशत्वं हली किल स एव च शेष' इति गीतगोविन्दे 'वहसि वहषि विषद' इत्यासिन्नोद्देशः।

तिरस्करिण्या यदुदार-(३८)मायया कुलात् भ्रमामो विषयाहताशयाः ।
यत्तत्त्वबोधेऽभ्युदिते तमोऽपहे मोक्ष्यामहे तं हरिमाश्रयामहे ॥३७॥
विचिन्तयन् दानपतिस्तदेदृशं नन्दव्रजेऽमिश्रयदात्मनो दृशम् ।
आलोक्य रथ्यासु हरेः पदं स्फुरत्-पद्मादिचिह्नं स रथादवातरत् ॥३८॥
प्रदक्षिणीकृत्य तदाऽऽप्लुतो मुदा निपत्य भूमावथ दण्डवत्तदा ।
हृदाऽऽवहत्तानि रजांसि(३९)मानय-न्दिशा पदाब्जस्य विलुप्यते न यत्(XII) ॥३९॥
प्रतोलिकाया-(68b)मृजुना क्रमेण स व्रजन् प्रमोदाम्बुधिमग्नमानसः ।
गोविन्दमालोकत गान्दिनीसुतः स्थितं गवान्दोहनदेश(४०)आनुतः(XIII) ॥४०॥
समुल्लसन्नीलशरीरसौभगं पीताम्बरं वत्ससमूहमध्यगम् ।
इन्दीवरं कैरवरागसंवृतं यथा सरस्यां कुमुदौघवेष्टितम्(४१) ॥४१॥

---

३८। यदुदारमायया यस्य हरेर्विश्वव्यापिन्या मायया तिरस्करिण्या मायाकृतेन व्यवधानेन । अत्र 'हरि'पदेन 'कृष्णस्तु भगवान् स्वय'मित्युद्दिष्टस्य श्रीकृष्णस्य ग्रहणं कवेरभिमतम् ।

३९। वृन्दावनस्य रजोऽतिपवित्रमिति हि तन्माहात्म्यविदो वदन्ति। तथा च भागवते वर्णनं गोपीप्रशस्तिप्रसङ्गे उद्धववचने 'आसामहो चरणरेणुजुषामहं स्यां वृन्दावने किमपि गुल्मलतौषधीना'मिति । भगवतः श्रीकृष्णस्य पदचिह्नानि यानि पुराणेषु पद्माद्यनेकलक्ष्मता विद्यिते तान्यत्र समन्ततः प्रकटानि । राजचक्रवर्ति-लक्षणानां सामुद्रकादिकल्पितानामतिशायी तच्चिह्नमहिमेति वैष्णवागमे विशेषः । मानयन्निति पूर्वश्लोके परामृष्टस्य दानपतेर्विशेषणम् । पदाब्जस्य दिशा निर्देशेन यत् चिह्नं न विलुप्यते इति योजना ।

४०। प्रतोलिकायां रथ्यायां पथीतिव्यावत् । 'रथ्या प्रतोली विशिखे'त्यमरानुशासनात् । गान्दिनी अक्रूरमाता । दोहनदेशे स्थितमिति सम्बन्धः । आनुतः सम्यक्स्तुति-परायणो भक्तिनम्रः । उत्तरार्धेऽनुप्रासवैशिष्ट्यं लक्षणीयम् ।

४१। श्रीकृष्णनीलशरीरस्येन्दीवरेण तत्परिधेयस्य पीताम्बरस्य कैरवरागेण हरिद्राभेण गोवत्ससमूहस्य च श्वेतबहुलतया कुमुदौघेन सादृश्यम् ।

पद्माननं खञ्जनमञ्जुलोचनं विलोकनाद्दुष्कृतपुञ्जमोचनम् ।
प्रांशुं मुरारिं पृथुपीनवक्षसं श्रीवत्ससलक्षणवन्तमुन्नसम्(४२) ॥४२॥
महाभुजङ्गाभभुजं सुमङ्गलं गाङ्गेय-(४३)चित्राङ्गदकङ्कणोज्ज्वलम् ।
गण्डस्फुरत्काञ्चनरत्नकुण्डलं कलोर्मिमन्निर्मलनीलकुन्तलम् ॥४३॥
लसत्सिताम्भोजवरावतंसकं पदाब्जशिञ्जन्मणिमञ्जुहंसकम्(४४) ।
पादाम्बुजाभ्यां(४५) भुवि सुप्रतिष्ठितं वन्यप्रसूनप्रकरेण भूषितम् ॥४४॥
तस्मात् स कुन्दोल्लसमानकान्तिकं सुधांशुबिम्बभ्रमकारकालिकम्(४६) ।
ददर्श रामं वसितासिताम्बरं(४७)कैलासमञ्जानुगतं यथा हरम् ॥४५॥
तौ तत्र(69a)दृष्ट्वा विकशन्मुखाम्बुजः प्रहृष्टचित्तो हृषिताखिलाङ्गजः(४८) ।
महामतिर्दानपतिस्तयोः समां भक्तिं वहन्नेतदचिन्तयत्तमाम्(४९) ।४६॥

---

४२ । श्रीवत्सस्तदाख्यो वक्षोदेशस्थो रोमपुञ्जः । स एव सलक्षणं माहात्म्यसूचकं चिह्नं तद्वन्तम् । उन्नसमुन्नतनासिकम् ।

४३ । गाङ्गेयचित्राङ्गदं स्वर्णविचित्राङ्गदं 'गाङ्गेयं स्यात् पुमान् भीष्मे क्लीवं स्वर्णकसेरुणो'रिति मेदिनी । अत्र सर्वत्र वर्णने कवेरनुप्रासवल्लभता प्रकटा ।

४४ । हंसकाः नूपुराख्याणि पादभूषणानि । 'हंसकः पादकटक' इत्यमरः ।

४५ । पदाब्जपादाम्बुजपदेऽनवीकृततात्यक्तपुनःस्वीकृततयोश्च लक्ष्यभूते इत्यलम् ।

४६ । चन्द्रबिम्बभ्रान्तिकारि अलिकं ललाटदेशो यस्येति । कुन्दकुसुमैरुल्लसमाना वर्धमाना कान्तिर्वपुःशोभा यस्येति । शीलार्थे चानश्प्रत्ययः । तस्मात् तत-स्तदनन्तरमित्यर्थेऽप्रतीतम् । हरेऽपि द्वितीयान्तानि विशेषणानि योज्यानि । तत्पक्षेः वसितासिताम्बरमिति व्याघ्रकृत्तिपरिधानस्य सूचकं तथा सुधांशुबिम्ब-भ्रमेत्यत्र भ्रमपदेन भ्रामणम् ।

४७ । वसितं परिहितं सितमम्बरं वस्त्रं येन तम् ।

४८ । निर्वृत्तार्थतया हृषिताखिलाङ्गजः पुलकिततनुः । दानपतिर्दानाधिकारी अक्रूरः । अङ्गजानि तनुरुहाणि । तथा च किरातेऽन्तिमे सर्गे शिवस्तुतौ 'तवोत्तरीयं करिचर्म साङ्गजम्' । साङ्गजं सलोमकमिति मल्लिनाथः ।

४९ । तयो रामकृष्णयोर्भजनभाजनयोः । अचिन्तयत्तमामिति तिङन्तात्तमप् आमुश्च प्रत्ययान्ते ।

एतत् परं ब्रह्म तदेतदद्वयं पदं पुराणे श्रूणमः स्म(५०) यद्वयम् ।
इमं हि वेदान्तविदः प्रचक्षते यो वासुदेवांश इह द्विधेक्ष्यते(XIV) ॥४७॥
अभीक्ष्णमक्ष्णोर्युगलं ममाफलं स्वजन्मनः प्राप हरीक्षणात् फलम् ।
अप्यङ्गमेतद्भगवत्प्रसादजे दत्तेऽङ्गसङ्गे सफलत्वमाव्रजेत् ॥४८॥
अप्येष पृष्ठे मम हस्तपङ्कजं विधास्यति प्रीतिवशात्त्वरन्निजम् ।
यदङ्गुलिस्पर्शकृताखिलांहसा-मङ्ग स्वयं सिद्धिरुपैतिरंहसा(५१) ॥४९॥
येनोर्जितं सूर्यसहस्रदीप्तिम-च्चक्रं समुत्क्षिप्तमविश्रमं भ्रमत् ।
दैत्यान्धकारेषु हतेष्वशीशम-द्यदङ्गना[नां] नयनाञ्जनं तमः(५२) ॥५०॥
येनासुरारिर्वसुधातले बलि-र्भोगान् स भुङ्क्ते हतकिल्बिषावलिः ।
जाताभयोऽसौ भविता सुरे-(69b)श्वरो मन्वन्तरं भुक्ततरं(५३)तथाऽकरोत् ॥५१॥
अप्येष मां शुद्धहृदां स्वभावतः कंसानुषङ्गार्पितदोषभावतः ।
करिष्यते मौनहतं लसद्धृति-र्लीलोपरक्तं नु कलिं विहास्यति(५४) ॥५२॥
किं वाऽस्य यावज्जनचित्तवर्तिनः(५५)स्फुटावबोधस्य क्रिया हि भाति न ।
तस्मादिमं भक्तिविनम्रधीः परं प्रया[म] कृष्णं शरणं सुरेश्वरम् ॥५३॥

---

६० । पुराणपदेन श्रीभगवतमहापुराणस्योद्देशः । 'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते' इति हि तत्र श्रीकृष्णसम्बन्धी निर्घोषः । 'कृष्णस्तु भगवान् स्वय'मिति हि रहस्यविदां ब्रह्मोपलभमानानां स्वीकृतिः ।

६१ । अखिलांहसां विविधपापानां स्वयं सिद्धिर्निष्ठा परिसमाप्तिरिति लक्षणयाऽर्थयोगः । त्वरत् सत्वरं सादरञ्च निजं हस्तपङ्कजं मम पृष्ठे विधास्यते धास्यतीत्यर्थे स्थापयिष्यतीति यावत् ।

६२ । दैत्यास्तमः प्रकाण्डा अतएवान्धकारमयतया रूपिताः तेषु हतेषु स्वल्पतरं यदङ्गनानां येषां स्त्रियां नयनाञ्जनं तमः प्रशमितं बभूव । अशीशमदिति क्रियागर्भो व्याजेनोक्तिलेशोऽपि मनोज्ञः ।

६३ । 'युक्तान्तरं' मा. पाठः । मन्वन्तरं भुक्ततरमकरोत् बहूनि मन्वन्तराणि व्याप्य तथैव स्वकर्मफलानि दानजनितानि भुक्तवान् ।

६४ । लीलासमापनान्ते कलिं कलियुगं प्रादुष्कृतपापबहुलं भुवनं विहास्यति त्यक्ष्यतीति यावत् । 'मलि' मा. पाठः ।

६५ । यावज्जनचित्तवर्त्तिनोऽन्तर्यामिणः सर्वज्ञस्य भगवतः ।

इत्थं विचिन्त्यैव मुकुन्दपादयो-रेत्याननामाशु(५६)जगद्विषादयोः ।
कृष्णार्पितां प्रीतिमुपानयत् परा-माकृष्य दोर्भ्यां परि[ष]ष्वजेतराम् ॥५४॥
सङ्कर्षणोऽपि प्रणतं तथैव तं प्रेम्णाऽथ पर्यष्वजतामुपागतम् ।
योऽनामयप्रश्नपुरःसरं तत-स्ताभ्यां समं नन्दनिकेतनं गतः ॥५५॥
अथो यथान्यायमुपेयिवानयं(५७) व्रजेश्वरस्तेन सभाजितः स्वयम् ।
भोज्यानि भुक्त्वाऽध्युषितं वरासनं सर्वं तदाऽऽचष्ट नृपस्य शासनम् ॥५६॥
उवाच चासौ बलदेवकेशवौ युवामवाप्यानुपमौ तनूद्भवौ ।
(70a) आस्कन्दनामानकदुन्दुभिर्घनां छिनत्ति(५८) पुंसामिह
पुत्रवासनाम्(XIV) ॥५७॥
शोकैरनेकैर्बहुकालकर्षितां विष्णो तवाम्बां बत कंसधर्षिताम् ।
दृष्ट्वा न केषां हृदयं विदीर्यते तां पाहि कार्यं तदवार्यवीर्य ते ॥५८॥
यच्चात्र वासे भवतः प्रयोजनं तत् पूतनादेरसुभिर्वियोजनम् ।
प्रमादिराज्ञां(५९)विजयोऽवशिष्यते तत्रापि कंसस्य वधो विशिष्यते ॥५९॥
श्रुत्वेति वाचं तमुवाच केशवः श्वफल्कसूनो बत निर्वृतो भव ।
गन्ताऽस्म्यहं श्वो मधुरां त्वया समं हन्तुं तृतीयेऽहनि तं नृपाधमम्(XV) ॥६०॥
इत्येवमुक्ते वचनेऽच्युतेन तै-र्गोपैः सुसज्जीभवितुं गृहागतैः ।
कोलाहलोऽकारि विधूदये वरे लोकैस्तरङ्गैरिव दुग्धसागरे ॥६१॥

---

५६। मुकुन्दपादयोरेत्य सङ्गत्य आशु सद्य एव आननाम प्रणतः। जगद्विषादयो-र्जगद्विषापहारकयोः। अदेः पचाद्यच्।

५७। यथान्यायं यथाशिष्टाचारं सस्नेहञ्च उपेयिवानुपगतोऽयमक्रूरः। तेन स्वयं सभाजित उपचरितश्च।

५८। आस्कन्दनासनेकछन्दभिरिति मा. पाठः। एषु प्रायश इन्द्रवंशामिश्रणेनोपजाति-वृत्तत्वम्। आनकदुन्दुभिर्वासुदेवो घनामतितरामसह्यामिति यावत् आस्कन्दनां पूर्वं दुर्वृत्तात् कंसादत्याचारतन्त्रैरासां पुंसां प्राकृतजनानां पुत्रवासनां तनयप्राप्ति-कामनां छिनत्ति दूरीकरोति अथच भगवन्तौ भवन्तौ पुत्राववाप्य वासनाच्छेदेन परां मुक्तिमापेति गूढमाकूतञ्च।

५९। 'प्रसाधि' मा. पाठः। प्रमादिनामनवधानतया दुःसाहसतया च मङ्गलपरिपन्थिनां क्षत्रियाणाम्। प्रमादिराज्ञामिति समासान्तताऽभावश्चिन्त्यः।

श्वफल्कजन्मा शय[न]ं मनोरमं भेजे सरामेण मुरारिणा समम् ।
तत्रापि रम्यालपनैर्निशामयं निनाय वाञ्छन् दिवसेश्वरोदयम् ॥६२॥

ततस्त्व-(79b)रुणकेशरी तिमिरकुम्भिकुम्भस्थलं
मयूखनखरैः खरैः समुददीदरत् स्वैरलम् ।
तदीयरुधिरैरवैम्यरुणदीतिभिर्लोहिता(६०)
पुरन्दरहरिद्बभौ शयनतोऽथ तेऽभ्युत्थताः ॥६३॥

इति **हरिचरिता**ख्ये नव्यसत्काव्यमुख्ये
प्रसरदमृतधारे वर्णितेशावतारे ।
कृतकलुषनिरासे तुष्टबालाविलासे
विदधदुरु यशोऽयं सर्ग एकादशोऽयम् ॥

---

६० । सिंहरूपेण वर्णितस्य हरेररुणदीप्तयः तिमिररूपहस्तिने रुधिरत्वेन प्रौढोक्तिकथितानिः सूर्यकिरणानि सिंहनखराः । समददीदरत् सम्यक् दारयामास । उत्तरार्धं अवैमीत्येनुमानालङ्कारोपयोगः सुसमः । पुरन्दरहरित् सूर्यदिक् प्राची ।

# हरिचरितम्

## द्वादशः सर्गः ।

अथ सर्वगुणैर्युक्तोऽलङ्कारैरुपशोभितः ।
प्रबन्ध-(१)स्तैरुपास्थायि रथोऽक्रूरसुशोभितः ॥१॥
सज्जं श्लिष्टं स पुष्टाश्वैः(२) स्यन्दनं गान्दिनीसुतः ।
अतिलङ्घनमाकामद्रामकृष्णसमन्वितः (समायुतः) ॥२॥
प्रसन्नमभवच्चित्तन्तदानीं रामकृष्णयोः ।
देवकीवसुदेवादिप्रेक्षणातिसतृष्णयोः ॥३॥
समं स बलदेवेन वनमाली रथेऽलसत् ।
स्वच्छन्दानन्दसान्द्रेण चन्द्रेणेव रविर्वसन् ॥४॥
मधुरं च ऋषीणां स(३) गीतं सुललितं क्वचित् ।
कलयन्नुपनद्यम्भः कालतोऽतोषयत् स्वचित् ॥५॥

---

१ । रथप्रबन्धयोरभेदकल्पनायां रूपकमलङ्कारः । अथ च प्रकृष्टायोजनयोजितो रथ इति 'प्रबन्धकल्पना कथे'त्यमरदर्शनात् प्रबन्धशब्दस्य यौगिकार्थप्रसिद्धिः । 'रूढिर्योगापहारिके'ति न्यायस्यानवसरो न चोदनीयः । अनन्तरश्लोके सज्जं श्लिष्टमिति विशेषणद्वयाभ्यां समर्थितमेतत् । एषु यथाक्रमं श्लेषादय आचार्यदण्डिप्रदर्शिताः दश गुणा दशसु श्लोकेषु निदर्शिताः । लक्ष्यलक्षणसङ्गतिश्च तन्मतमनुगृह्य वर्तते ।

२ । स्पुष्टश्चैरिति मा. पाठः ।

३ । मधुरालिधाषीणां स तदा स्वललितः निचित् । कुलो मुपयंगाम्भोनकालतोऽतोषयष्णचिः ॥ इत्यस्पष्टः पाठः । रोषपूतस्रभिरितीव ने. मा. पाठः । शोधितः पाठो मूले दर्शितः । कालतः यथाकालं प्रभाते । इतिन्तु गीते क्रियाविशेषणम् । अथवा कालतस्तस्मिन् समये इति उत्तरार्धे । उपनद्यम्भः यमुनाजलसविधे सुललितं गीतमृषिवृन्दकृतं स्तवम् । मधुरमिति वस्तुनो रसवत्ता सुललितमिति गीतस्य वाचि माधुर्यमित्यनयोर्विशेषणयोरुपयोगः । स्वचित् स्वकीयं मनः ।

**सुकुमार**ाणि कंसस्य रामाङ्गाणि तदङ्गनाः(४) ।
स्मरन्त्यो बत कान्तानि न लप्स्यन्ते सुखं मनाक् ॥६॥
**अर्थव्यक्ति**रभूद्राम मम वासेऽत्र गोकुले(५) ।
यशोदानन्दहृदये कथं स्यातामनाकुले(६) ॥७॥
**उदार** राम नन्दस्य पश्य चेष्टितमात्मजम् ।
सौरे क्षीणोदयेऽप्यापि धत्ते प्राञ्चन्मुखाम्बुजम्(७) ॥८॥
**ओजः**समर्पिकन्दर्पदर्पार्दितकरान्तराः(८) ।
कथमस्मद् विना राम जीविष्यन्ति व्रजाबलाः ॥९॥

---

४। 'तदङ्करा' इति मा॰ पाठः। हे रामेति तटस्थवत् बलदेवं प्रति सम्बोधनम्। अथवा रामाणि कमनीयानि अङ्गानीति कर्मधारयसमासेनार्थः। सुकुमाराणि कोमलानि कान्तानि रमणीयानि। स्त्रियः स्वकीयपत्यङ्गानि तथैव मन्यन्ते। स्मरन्त्य इत्यचिरेणैव कंसः स्मृतिशेषतामेष्यतीति सूचनम्।

५। अत्र गोकुले वासे मम व्रजनिवासे। अर्थव्यक्तिः प्रयोजनप्रकाशनं वस्तुवृत्तेन दुष्टदमनेनावतारत्वात् तस्य च 'यच्चात्र वासे'त्यादि (११।५९) श्लोके तात्पर्यसूचतात्। अथचार्थव्यक्तीति निर्दिष्टगुणता च।

६। यशोदाया मातृस्थानीयाया नन्दस्य च पालकस्य पितुर्हृदये कथमनाकुले अव्यथिते योग्यसुतरूपेण लालनात् स्नेहपूर्णत्वात् सुस्थे अभूतामिति योजना। व्यतिरेकेण तयोर्हृदये अधुनाऽऽकुले व्यथिते स्यातामिति तात्पर्यम्।

७। सौरे क्षीरोदयेप्यापि······मा. पाठः। सौरे क्षीणोदये अवसानोन्मुखे सूर्येऽपि यथाऽम्बुजं कमलं सूर्यं प्राञ्चत् प्रत्येव दत्तावधानं स्यात् तथा श्रीकृष्णे वृन्दावनादागते तस्य वृन्दावनप्रत्यावर्तने स्वल्पायामपि सम्भावनायां तं प्रति नन्दस्य निर्भरशीलं दर्शनम्। उदारगुणस्य दण्डिधृतं निदर्शनम् 'अर्थिनां कृपणा दृष्टिस्त्वन्मुखे पतिताऽसकृत्। सदवस्था पुनर्देव नान्यस्य मुखमीक्षते' इत्यत्र तुलनीयम्।

८। कन्दर्पदर्पेण गर्वितेन कामेन (कृदभिहितो भावो द्रव्यवत् प्रकाशते इति कृत्वा) अर्दितं पीडितं करान्तरं भुजान्तरं वक्षो यासां ताः। '...करान्तरा' इत्यत्र बहूनां मते नेसार्थता पददोषः।

**कौन्तं** कृष्णं तदाऽऽयान्तं पश्यन्त्यो व्रजभीरवः(९)।
समतुष्यन् क्षणादेव श्लथद्वलयबाहवः ॥१०॥
**समाधि**स्थास्तदा तस्य शोकप्लावितवक्षसः।
एवमाख्यन् गुणान् धीरा यथाऽऽर्त्यादिभीरचेतसः(१०) ॥११॥
अलङ्कारानथ ब्रूमः किमस्य वनमालिनः।
**स्वभावाख्यान**मेव स्याद् भर्तुर्मेऽष्टरसात्मनः(११) ॥१२॥
**जात्याऽयं**(61a)क्षत्रियः कृष्णो वाचा मधुरकोमलः।
हृदयेन दृढस्तन्नो जहातीह तथाऽबलः(१२) ॥१३॥

---

९। व्रजभीरवः व्रजाङ्गनाः 'अङ्गना भीरुः कामिनी वामलोचने'त्यमरकोषे 'भीरुरार्ते त्रिलिङ्गं स्याद्वरयोषिति योषिते'ति मेदिन्यां च पाठात्।

१०। अचेतसः चैतन्यहीनाः पशुपक्षिप्रभृतयोऽपि समाधिस्थाः श्रीकृष्णगुणगणध्यान-निमीलितनयनाः शोकाश्रुप्लावितवक्षसस्तद्विरहार्त्याऽश्रुजलैर्वक्षोदेशानार्द्रयन्तस्तद्गुणान् आख्यन् प्राकटयन्।

११। अथानन्तरमलङ्कारप्रस्तावेऽधिकृत इति च द्विधा विवरणम्। 'अथाथो संशये स्यातामधिकारे च मङ्गले। विकल्पानन्तरप्रश्नकार्त्स्न्यारम्भसमुच्चये॥' इति मेदिनी। उत्तरार्धेऽष्टरसात्मनः रसस्वरूपस्य भगवतः श्रीकृष्णस्यालङ्कारवर्णनं स्वरूपाख्यानमेव न तदतिवर्तते यतोऽलङ्कारता स्यादित्याशयः। अथच स्वभावाख्यानमित्याचार्यदण्डिनो गणनायामाद्यालङ्कृतेः 'स्वभावाख्यानमुपमे'त्यादि काव्यादर्शे परिगणनात्। नवीनालङ्कारिकनये रसाद्यनुपकारेऽलङ्कारत्वविघटनादित्यपि ध्येयम्। रसात्मकं काव्यमलङ्कारा रसोपकारका एवमष्टसात्मको भगवान्। तस्योपकारकाणामलङ्काराणामवतारणमिह विधीयते रुचककृतसहृदयलीलासम्मतवस्तुद्वारेण। 'जातिक्रियागुणद्रव्यस्वभावाख्यानमीदृश'मिति तदलङ्कारप्रपञ्चने लक्ष्यलक्षणयोः सङ्गतिं साधयत आचार्यदण्डिनः शैलीमनुवर्तमानेन कविना 'जात्याऽय'मित्यादि क्रमेण लक्ष्यता। क्षत्रिय इति जातिः, कृष्ण इति द्रव्यं, वाचेति क्रिया दृढ इति गुण इत्येव कुत्रापि समुद्दिष्टम्। परन्त्वत्रान्यत्र चालङ्कारलक्ष्यस्थापने क्वाप्यलङ्कारजीवातुर्विच्छित्तिर्न वरीवर्तीति सहृदयानामभियोगः स्यात्।

१२। अबलस्तथाऽपि दृढ इति विरोधाभासः। अबलः शक्तिहीनः नियतेरबाध्यत्वादेवम्भूतः। २३तमं पद्यं द्रष्टव्यम्।

उपमानं मुकुन्दस्य क्रियते कथमिन्दुना।
दोषासङ्गकलाभङ्गकुरङ्गसमवाहिना (सञ्चरिष्णुना)(१३) ॥१४॥
पद्मेनास्य मुखस्योपमानं परमसाहसम्।
सरसं सारसं हीदं प्रोत्फुल्लमपि नीरसम्(१४) ॥१५॥
मुकुन्दवदनाम्भोजं मञ्जुलोचनखञ्जनम्।
चारुरूपकमीक्षध्वं(१५)दुःखदारिद्र्यभञ्जनम् ॥१६॥
वक्षो लक्ष्मीपतेर्भाति भूयो मदनदीपकम्।
तारावृन्दमिव व्योम्नि मुक्तादाम्नेह मोहकम् ॥१७॥
ध्रुवं कंसवधं कर्तुं मधुरामेत्य माधवः।
आवृत्तिं न यदा कर्ता नागरीवृन्दबान्धवः(II) ॥१८॥
आक्षेपेऽस्यानुगमने प्राप्स्यामो भृशमव्ययम्।
नावाप्स्यामः कृष्णहृदः क्षणासङ्गं गता वयम्(१६) ॥१९॥ युग्मकम्।

---

१३। दोषासङ्गः रात्रिसङ्गतिः, कलाभङ्गात् पूर्णिमातिथिं विनाऽन्यत्र परिपूर्णताऽभावः। कुरङ्गा मृगाश्चन्द्रस्य मृगलाञ्छनत्वेन प्रसिद्धेः। अथच श्लेषेण दोषो वैकल्यं कलाभङ्गः कलास्वविशारदत्वं कुरङ्गः कुत्सितानुराग इति च।

१४। इदं सारसं सरःसम्बन्धि सरोजातमिति यावत् नीरसं, मुखन्तु सरसम्। वस्तुतस्त्वत्र नवीनानां मते व्यतिरेकालङ्कारः। आचार्यदण्डिमते 'यथाकथञ्चित् सादृश्य'मित्युपमालक्षणेनोपमा समाधेया। आचार्यधृतोदाहरणे 'पद्मं बहुरजश्चन्द्रः क्षयी'त्यादौ प्राचीनसंज्ञिता निन्दोपमाऽप्येवमेव भवति। अतएवोपमाऽधिकारेऽत्र दर्शितमिदं पद्यम्।

१५। चारुरूपकतीक्षध्वं'''मा. पाठः। चारुरूपकं सुन्दररूपं शैषिकः कप्। चारु रूपकमित्यलङ्कारपरिगणने च्छेदः। इदमवयवरूपकम्, न तु 'स्फुटकमलोदरखेलित-खञ्जनयुगमिव शरदि तडाग'मिति गीतगोविन्दे वदनवर्णनमिवावयविनोऽपि रूपणमत्र।

१६। यदा नावृत्तिं कर्त्ता न प्रत्यावर्तेत तदाऽऽक्षेपेऽनुतापे अव्ययं व्ययविरहं विच्छेदशून्यतां नावाप्स्याम इति युग्मकेन श्लोकद्वययोजना।

विहितोऽर्थान्तरन्यासः सेव्योऽस्माभिः सदा हरिः ।
स्वकं विहाय कस्य स्याद्विख्याऽख्यात-[72a][ज]नोपरि (१७) ॥२०॥
चन्द्रोपेन्द्रावुभौ रम्यौ व्यतिरेकस्त्वतो भवेत् ।
षोड़शैव कलाश्चन्द्रे चतुःषष्टिस्तु केशवे ॥२१॥
विभावनां(१८) विनाऽप्येव चित्राङ्गो मधुसूदनः ।
अपराधं विनाऽस्मासु कथं व्यावर्तयेन्मनः ॥२२॥
समासोक्तिरियं सख्यः श्रूयतां मम सम्प्रति ।
कल्पवृक्षो विहायास्मान दैवादन्यत्र गच्छति ॥२३॥
चिन्तितार्थप्रदः कान्तः समासन्नोऽथ पश्यत ।
चिन्तामणिः प्रमाऽतीत-(१९)स्तं यत्नेनाभिरक्षत ॥२४॥
श्रृणुतातिशयोक्तिं मे संशयोत्कर्षसम्भवाम्(२०) ।
कृष्णतेजोभिराच्छन्ने रथेऽक्रूरोऽस्ति वा न वा ॥२५॥
उत्प्रेक्षा-(२१) मोऽधुनाऽक्रूरो कृष्णं नेतुमिहागतः ।
प्राग्र वेदी किञ्चिदासीन्नो नूनमपि योगतः ॥२६॥
पृषदश्वसमाश्वेन रथेनाश्वपनीयते ।
वृद्धौ हेतुरयं गच्छन् न केनापि निवार्यते(२२) ॥२७॥

---

१७। आत्मीयं जनं विहायाख्यायेति यावत् जनोपरि अपरिचितजनविषये। विख्या विशिष्टतया ख्यातिः। स्वंकुम्विहाय कस्य स्याद्विक्षाऽक्षातनोपरीति माः लि पाठः।

१८। विशेषेण प्रसाधनादिभूषामिति यावत्। अत्र द्वयोरेवार्धयोर्विभावनाऽलङ्कारः स्फुटः।

१९। पुमानितीतस्तं मा पाठः।

२०। एतच्चाचार्यदण्डिसूचितलक्षणं (का. आ. २।२१४) 'उत्कर्षवत्तया संशयातिशयादीनां व्यक्तौ' प्रमाणकमनुसृत्य। तद्दर्शितलक्ष्यं (२।२१९) 'अस्ति नास्तीति सन्देहो न मेऽद्यापि निवर्तत' इत्यस्य प्रतिध्वनिरिवायं श्लोकः। तन्मते भेदेऽप्यभेद इत्यादि चतुर्थो भेदो न प्राचीनलक्षणे स्फुट इति न विचिकित्सितव्यम्।

२१। अत्र परस्मैपदं चिन्त्यम्। नूनमित्युत्प्रेक्षावाचकम्। योगतो योगबलेनापि प्राग्रवेदीति क्रियागर्भेण सम्बन्धे सम्भावनायां द्योत्यायामुत्प्रेक्षा। प्राग्रवेदी प्रकृष्टमनागतवेत्ता।

२२। पृषदश्वसमाश्वेन वायुवेगवदश्वेन रथेन गच्छन्। अत्र ज्ञापको हेतुरिति दण्डिमते। वृद्धौ अभ्युदये व्रजस्यात्यन्तिकश्रेयसि।

अस्माभिर्वार्यतामेव **सूक्ष्मो**ऽर्थ उपदिश्यते ।
प्राणेन विगतेनाथ नीतेनैव हि (72b) दृश्यते ॥२८॥
एवं तासु लपन्तीषु कृष्णः पुलकमुद्गतम् ।
किल प्रेक्ष्याथ हर्षोक्त्या **लवे**नापललाप तम्(२३) ॥२९॥
गोविन्दं वहता तेन स्यन्देनेनाथ गच्छता ।
**क्रमे**णार्केन्दुपत्रनाः प्रभारूपजवैर्जिताः ॥३०॥
**प्रेयो**ऽक्रूरोऽवदत् कृष्णं विष्णो तव समागमात् ।
इयं नो ब्रह्मलोकादेः पुरीतोऽतिमनोरमा(२४) ॥३१॥
**रसवत्**त्वत्पदाम्भोज-(२५)दृष्टौ मे यदभून्मनः ।
तन्निष्पन्नेप्सितं वृत्तं साफल्यं मम जन्मनः(III) ॥३२॥
**ऊर्ज्जस्वि** भवदीयाङ्घ्रिलङ्घितं भुवनत्रयम् ।
विससर्ज बलिर्विश्वोत्तंसः कंसः कियानयम्(२६) ॥३३॥
दिदर्शयिषुरीशित्वं तं प्राह हरिरीश्वरः ।
**पर्यायोक्त**मिहाकर(२७)मध्याह्नस्नानमाचर ॥३४॥

---

२३। किलेति पादादौ प्रयोगोऽवद्यः। लवेन छलेन पुलकमपललाप गोपयामास। 'लव'शब्दोऽपि संज्ञायां लेशवद्दृश्यते यथा दण्डिनाऽप्यलङ्कारतालिकायां 'हेतुः सूक्ष्मो लवः क्रम' इति ।

२४। 'प्रेयः प्रियतराख्यान'मिति लक्षणम् ।

२५। त्वत्पदाम्भोजदृष्टौ त्वत्पादपद्मदर्शने मे मनोऽभूदित्यन्वयः ।

२६। विश्वोत्तंसो विश्वशिरोभूषणवन्मान्यो दाता बलिः। अयं कंसः कियान् तत्तुलनया कियत्परिमाणमहिमेत्यर्थः ।

२७। पर्यायोक्तं पर्यायेण शास्त्रलोकादिदृष्ट्या यथापर्यायं निर्दिष्टम्। अत्रेष्टोऽर्थ आवां तु स्वकर्मणीशित्वप्रदर्शने प्रवर्तावहे इति। एवमपि दण्डिनिदर्शने 'दशत्यसौ परभृत' इति श्लोकोत्तरांशे 'युवाभ्यां स्वैरमास्यता'मित्यत्र ।

कालिन्द्यामत्र नोऽभीष्टं कृष्णेन सन्निवेशितम् ।
**समाहितं**(२८) मनः कृत्वाऽऽरेभे स्नानं यथोदितम् ॥३५॥
वारिमग्नोऽयमद्राक्षीदन्तर्जलतले स्थितम् ।
बलं बिभ्रतमैश्वर्य**मुदात्तं** भुजगैर्वृतम् ॥३६॥
सहजांस्तत्-(73a)फणमणीन्(२९) प्रत्येकं भास्वतः सदृक् ।
**उदात्त**वान् दशाऽक्रूरो भगवद्गतविस्मयदृक् ॥३७॥
भास्वरे द्वादशार्कत्वेऽ**पह्नुतिं** बत कुर्वता ।
फणामालागणेनास्य(३०)सहस्राधिकताऽर्पिता(IV) ॥३८॥
मुदाऽसौ मन्दविहिता**श्लेषः** सहलसत्करः ।
आरोहिण्यासने रूढो(३१)भूवतंसोऽ[ति]भासुरः ॥३९॥
शुभ्रेणाभाविशेषेण वपुषा नीलवाससा ।
तुल्योऽधाधोवनाश्लेषि-(३२)कैलासेन महीयसा ॥४०॥

---

२८। समाहितं सम्यक् निवेशितम्। दैववशात् कार्यसाधनसमापत्तिः समाहितमिति-दण्डिलक्षणमत्र निर्वाह्यते ।

२९। उत्पलमणीन्......मा. पा । उद्गतफणानां सर्पाणां शिरोधृतमणीन् भास्वतो दीप्तिशीलान् उदात्तवान् उद्‌ ऊर्ध्वदशा गृहीतवान् ददर्शेत्यर्थः । द्विविधस्योदात्तस्य निदर्शने ३६, ३७तमपद्ये । आद्ये उदात्तमिति महतश्चरितं द्वितीयेऽभ्युदयगौरवम् । उभयं दण्डिलक्ष्मानुसारि ।

३०। अपह्नुतिं तदासौ भ्रमं कुर्वता । सहस्राधिकताऽर्पिता कृत्रिमतया स्थापिता । एतदेवापह्नुतिबीजमन्यार्थदर्शनघटकम् ।

३१। मुदाऽऽनन्देन बन्धुभिर्मन्दम् ईषद्विहिताश्लिङ्गनसंयुक्तपाणिश्च आसने आसीनो धरणीभूषणश्च । वरः बलः । अथच भूवतंसो लक्षणया चन्द्रो मन्देन शनिना विहिताश्लेषः अश्लेषानक्षत्रयुक्तः सह इवात्र लसद्भिर्दीप्तिमद्भिः करैः किरणैर्युतः, आरोहिण्यासने उदयाचले । नव्यमते परमत्र बलश्चन्द्र इवेत्युपमाध्वनिः ।

३२। कैलासोऽधोवनाश्लेषी निम्नस्थतरुराजिभिर्घनाभैः सम्पृक्तः। बलस्य धवलद्युति-र्नीलेन वाससाऽपि न मलिनीकृता यथाऽधःस्थितानां वनानां श्यामतया

स पृथक्स्तोत्रहीनोऽपि वाद्यं गीतञ्च नृत्यवत् ।
नेत्रेणास्यैकहृद्छेदयोग्येनात्य**विशेषयत्**(३३) ॥४१॥

इन्द्रादिदशदिक्पालैर्यो दधत्**तुल्ययोगिताम्** ।
पूर्तैः स्रगादिभोगैश्च द्विधाऽऽश्रयति भोगिताम्(३४) ॥४२॥

**विरोधो** वैनतेयेन सहजेन विवर्धितः ।
पद्मनये नते येन विरोधोऽयेन खण्डितः(३५) ॥४३॥

चकाराप्र**स्तुतस्तोत्र**(३६)-मक्रूरस्तद्वदिद्धतया ।
सदा राजवशा धन्या जीवन्त्यन्ये नयाश्रयाः ॥४४॥

---

कैलासाचलस्य सितता न तिरस्कृता भवति। दण्ड्याचार्योऽपि श्लेषोदाहरणे चन्द्रमेवेदृशेन शब्दविन्यासेन वर्णयति 'असावुदयमारूढो कान्तिमान् रक्तमण्डलः। राजा हरति लोकस्य हृदयं मृदुभिः करै'रिति द्विधानिर्दिष्टस्याभिन्नपदत्व उदाहरणेन। 'तमतनुवनराजिश्यामितोपत्यकान्त'मित्यादि 'असितमधरवासो बिभ्रतः सीरपाणे'रित्यन्तं किरातपद्यं स्मरणीयम्।

३३। स्तोत्रे स्तुतिगीते पृथगप्रवृत्तोऽपि नृत्यवत् वाद्यं गीतञ्चाविशेषयत्। विशेषं करोतीति विशेषयति। नामधातोः लङि रूपम्। आस्यैकहृदयोच्छेदयोग्येन नेत्रेण। विशेषस्तुल्ययोगितेति काव्यादर्शेऽलङ्कारोद्देशानुयायि संज्ञाया लक्ष्यस्य च सूचनम्।

३४। पूर्तैः खाततडागादिभिस्तत्कृतैः सुकृतैरिति यावत् स्रगादिभोगैर्देवानां दिक्पालान्तु कैमुत्येनेत्थं द्विधा प्रकारद्वयेन दिक्पालैस्तुल्ययोगितां दधत् यो भोगितामाश्रयति। 'इष्टेन पूर्तेन नलस्य वश्याः स्वर्भोगमत्रापि सृजन्त्यमर्त्याः' इति नैषधीयपद्योट्टङ्कितन्यायेनेदम्। 'यमः कुबेरो वरुण' इत्यादिदण्डिनिदर्शनमुपजीव्य मण्डितमेतदिति च ध्येयम्।

३५। सहजेन स्वभावजातेन सहोदरेण च। नते जने विरोधो न खण्डितो नाशित इत्यर्थः। अयेन नीतिशास्त्राहतशुभविधिना करणेन। 'अयः शुभावहो विधि'रिति कोषः। खण्डितो विवर्जितश्च। एतयोः क्रिययोर्विरोधात् दण्डिप्रदर्शितनिदर्शनानुयायी विरोधालङ्कारः। एवंनयेत्युत्तरार्धे स्थिते इति योजना।

३६। एवमप्यप्रस्तुतप्रशंसाया दण्डितालिकायां संज्ञा।

(73b) उदकस्थं हरिं वीक्ष्य तेनाऽव्याजस्तुतिः कृता(V)।
गाङ्गौघैर्यामुनौघश्रीरतस्ताभ्यां समङ्कृता(३७) ॥४५॥

बलोत्सङ्गे हरिं वीक्ष्याक्रूरोऽबोधि महामनाः।
ज्येष्ठानुजव्यवहृतावियं मुख्या **निदर्शना** ॥४६॥

पीताम्बरा घनाभासा हारिणी सुममालया(३८)।
हरेस्तनुः **सहोक्त्या**ऽभा मणीन्द्रेणानुबद्धया ॥४७॥

---

३७। श्रीरनेनोद्धर्यां···ने. मा. पाठः। नद्यां यमुनावारिगर्भे दृष्टाभ्यां श्रीकृष्णबलदेवाभ्यां सममेकयोगेन कृता गाङ्गौघयामुनौघश्रीः सितासितवर्णताव्याजेन। एतदेवात्र ५४तमे पद्येऽपि परामृष्टम्। एवं भागवते "निमज्ज्य सलिले तस्मिन् जपन् ब्रह्म सनातनम्। तावेव ददृशेऽक्रूरो रामकृष्णौ समन्वितौ ॥' पक्षान्तरे हरिवंशेऽत्रावतारितस्य भगवतस्तवस्यानुकरणमिदम्। 'अये पद्भ्या'मिति पाठे कृष्णपद्युगलस्तुत्याऽक्रूरस्य हरौ परा भक्तिः प्रकटिता। तेन अव्याजेति च्छेदः। अव्याजा अकपटेयं स्तुतिः। अये इति विस्मये। चरणयोः श्यामत्वेन नखानां सितत्वेन च क्रमेण यमुनावारिश्रीः गङ्गाप्रवाहश्रीश्च वर्णिता। एवं भक्तस्य कस्यचित् वैष्णवकवेरनवद्ये पद्ये—"नखरुचिसितगङ्गा कृष्णपादप्रयागे तदुपरि शितिरोचिर्भानुजासङ्गताऽऽसीत्। अरुणकिरणधारा धात्रीकन्याऽप्यधस्ताल्लसति निखिलभक्ताभीष्टदेयं त्रिवेणी ॥" अभीष्टदेवतयाऽऽश्रितस्य देवस्य नखयुतचरणवर्णनं कवीनां भङ्गी। यथा रसिकमूर्धन्यस्य कवेरानन्दवर्धनस्य। 'स्वेच्छाकेशरिणः स्वच्छस्वच्छायायासितेन्दवः। त्रायन्तां वो मधुरिपोः प्रपन्नार्तिच्छिदो नखाः' इति। आपाततः पद्युगलस्य किर्मीरत्ववर्णने दोषच्छलेन तस्य स्तुतिरेव कृतेति "यदि निन्दन्निव स्तौती'ति दण्डिलक्षणलक्षिता व्याजस्तुतिरेव।

३८। सुममालया कुसुममालया वनमालाऽऽख्यया हारिणी हारवती। 'धान्येन धनवा'निति वदभेदलक्षणे तृतीया। मणीन्द्रेन कौस्तुभेनानुबद्धया। सहोक्त्या सह प्रकाशनया। आभा दीप्तिमती "आतोश्चोपसर्गे क" इति 'क' प्रत्ययः। मुणीन्द्रेनानुबद्धयेति मा. पाः। सुमं कुसुममिति पर्यायभेदः।

मुकुन्दोपरिवृत्तिभ्यो निवर्त्याश्रमतोऽर्पितम् ।
मुनिभिः सागराकारस्त्वानन्दोऽग्राहि सस्मितम्(३९) ॥४८॥
आशीर्वचनमूचुस्ते मुनयोऽतिमनोरमम् ।
जय कृष्ण हरे जिष्णो प्रसीद पुरुषोत्तम ॥४९॥
सङ्कीर्णं मुनिहंसोघैः प्रासोल्लासं विधूदये(४०) ।
तमेवं सागरमिव प्रेक्ष्याक्रूरो विसिस्मिये ॥५०॥
स्वाभाविकं(४१)तदैश्वर्यं दर्शयन्तौ विलोक्य तौ ।
अक्रूरश्चिन्तयामास रथतोऽम्भ इहागतौ(VI) ॥५१॥
उत्तार्य स ततोऽद्राक्षीद्रथस्थौ पुरुषोत्तमौ ।
निक्षिप्तनृत्यवेशाभ्यां नर्तकीभ्या-(74a)मुभौ समौ ॥५२॥
तदाश्चर्यं समीक्ष्यास्य विवक्षोरथ केशवः(VII) ।
वचनं स्तम्भयामास सर्वज्ञः सर्वसम्भवः ॥५३॥
किं सा दृष्टा मया माया किं वा तत् सत्यमित्यसौ ।
निमज्ज्यान्तर्जलेऽपश्यत् पूर्ववत्तौ महोजसौ ॥५४॥

---

३९ । मुनिभिः सस्मितं स्मितरूपानन्देनाश्रमं यथा स्यात्तथा लीलया प्रकटनपूर्वं मुकुन्दोपरि अर्पितं वृत्तिभ्यो बहिरिन्द्रियवर्तिभ्यो विषयादिभ्यो निवर्त्य अपसार्य आनन्दोऽग्राहि । "क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्······। ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।········ तेषामहं समुद्धर्ता मृत्युसंसारसागरात् । भवामि न चिरात् पार्थ मय्यावेशितचेतसाम्" इति भगवदाश्वासनं स्मरणीयम् । विषयेभ्यो निवर्तनेन विनिमयरूपेणानन्दलाभ इति लक्ष्यलक्षणसङ्गतिः ।

४० । सागरपक्षे मुनयो हंसा इव तेषामोघैरिति हंसयोगः कथमपि सङ्गमनीयः । वस्तुतः मुनिषु हंसादचतुर्विधसंयमिनां मध्ये उत्कर्षवत्तया स्मृता इत्यपि । सागरसङ्गमे पूर्णा समावेशः स्मर्यते । सङ्कीर्णमित्यनेन भङ्ग्या गङ्गाऽऽदिना सङ्गतमित्यर्थलाभोऽपि । विधूदये सागर उल्लसते । विधुर्भगवांश्च ।

४१ । नात्र भाविकमित्यलङ्कारपरिगणनपक्षे मनोज्ञा च्छेदकल्पना । द्वादशश्लोकत एतदन्तं श्लोककदम्बकं काव्यादर्शोल्लिखितानामर्थालङ्काराणां क्रमतो निदर्शकम् ।

ऐश्वर्यमवधार्याथ हरेः परमभक्तितः।
इत्थं निर्दत्य तत्प्रीत्यै प्रणतस्तत्र शक्तितः ॥५५॥
स्वप्राणान् सम्यगायम्य प्रत्याहृत्याक्षमन्ततः(४२)।
चिरब्रह्माभिषङ्गस्य विरम्यायाद्रथं ततः ॥५६॥
तमुवाचाथ गोविन्दः सान्द्रानन्दौघसंप्लुतम्।
अक्रूरं वद मे यादृग् दृष्टं नूनं त्वयाऽद्भुतम्(VII) ॥५७॥
प्रत्युवाच स तं कृष्ण किमतोऽत्यद्भुतं महत्।
सर्वाश्चर्यमयेनास्मि सङ्गतोऽङ्ग त्वया सह ॥५८॥
इत्युक्त्वा प्रैरयदश्वान् स्वान् मनोरथरंहसः।
सस्यदं स्यन्दनस्तूर्णं(४३)मथुरामाससाद सः ॥५९॥
कंसभीत्या वसत्यार्यो भवन्तौ द्वौ सदा नवाम्।
पद्भ्यामेतां पुरी-(74b)मेको रथीयानि शुभानि वाम्(४४) ॥६०॥
येयं पुरीह न पुरो भवद्भ्यां पितृमन्दिरम्।
मत्कृतेऽस्म्यन्वहं दृष्टः कंसो भ्राताऽस्य चास्थिरः(VIII)(४५) ॥६१॥
(क्रियाद्वयगुप्तम्)

---

४२। अन्ततः अन्तस्तः स्वान्तात् अक्षमिन्द्रियं प्रत्याहृत्य योगमार्गेण। 'अक्षो ज्ञानात्मशकटव्यवहारेषु पाशके' इत्यारभ्य 'चक्रे कर्षे पुमान् क्लीबं तुत्थे सौवर्चलेन्द्रिये' इति कोषः। चिरब्रह्माभिषाङ्गस्येति सम्बन्धविवक्षायां षष्ठी। दीर्घतरध्यानयोगाद्विरम्य व्युत्थित इति तात्पर्यम्। 'अन्तः स्वरूपे निकटे प्रान्ते निश्चयनाशयोः। अवयवेऽपी'ति हैमः।

४३। स्यदो वेगः।

४४। आर्यो बलदेवः कंसभीत्योपलक्षितो वसति। भवन्तौ द्वौ सदाऽधुना प्रतिक्षणं पद्भ्यां पादयुगलेन न तु रथादिना भवत्सम्भावनायोग्येन पुरीमिमां मथुराम् एतां आगच्छतां लोटि प्रथमपुरुषद्विवचने। एकोऽहं रथेन इयानि गच्छेयम् लिङि उत्तमपुरुषैकवचने रूपम्—सम्भावनायां लिङ्। वाम् आवयोः शुभानि सन्तु।

४५। अस्थिरश्चञ्चलमतिः। पुरः सम्मुखस्थं पितृमन्दिरं न येयं कृति क्रिया-इत्यामन्त्रणम्। अस्मीत्यहमर्थं तिङन्तप्रतिरूपको निपातः। दृष्ट इति निष्ठा कृदन्ता क्रिया। एवं येयमिति दृष्ट इति क्रियाद्वयगुप्तम्।

एवमुक्तं गतेऽक्रूरे कृष्णेन हलिना समम् ।
प्रविश्यालोक्यतामाशु तत्तु वेश्म पुरोत्तमम् (४६) ॥६२॥ (एकक्रियागुप्तम्)
पूरितैरतुलैरद्रेः प्रासादैरुज्ज्वलप्रभैः ।
चक्रे मुदं मुकुन्दस्य हिमवन्मेरुसन्निभैः(४७) ॥६३॥ ( कर्तृगुप्तम् )
विरमन्(४८)पथि कासारे विकशत्पद्ममण्डले ।
पश्यन् ननन्द गोविन्दो हंसचक्रालिसङ्कुले ॥६४॥ (कर्मगुप्तम्)
काननं तत् पुरीशस्य वीक्ष्य मालोपहारकम् ।
हृदो मुदाऽन्यतोऽनैषीन्नेत्रमद्भुतदर्शकम् (४९) ॥६५॥ ( अर्थद्वयवाची )

---

४६ । प्रविश्य आलोक्यत अमा आशु इति पदानां छेदः । आलोक्यतेति कर्मणि लङन्तक्रिया गुप्ता । अमा सहेत्यर्थे सर्वसमं साधु सौष्ठवमयमित्यर्थे सममिति च योज्यम् । "सर्वसाधुसमानेषु समं स्यादभिधेयवदि'ति विश्वः । अथवा, सममिति युगपदर्थे क्रियाविशेषणम् ।

४७ । पूः मथुरापुरी अद्रेरितैः पर्वतादुत्थितैः प्रासादैर्मुदं चक्रे इति योजना । पूरिति कर्तृ गुप्तम् । हिमवदित्यादि विशेषणं नगरस्याभ्रंलिहप्रासादसौभाग्यं सूचयति । उज्ज्वलप्रभैरित्यत्रोज्ज्वलपदं दीप्तार्थे यौगिके । तथा च 'उज्ज्वलस्तु विकासिनि । शृङ्गारे विशदे दीप्तेऽपी'ति हेमचन्द्रः ।

४८ । वरयन् इति मा. पाठः । विरामं प्रमोदमनुभवन् । 'लतानुपातं कुसुमान्यगृह्णा'-दित्यादिनि 'काकुत्स्थ ईषत् स्मयमान आस्त' इत्यन्ते भट्टिपद्ये यथा वर्णितं तद्वत् । हंसचक्रालिसङ्कुले हंससमूहैः परिव्याप्ते विकसत्पद्ममण्डले सद्यःप्रस्फुटत्कमलपृष्ठपरिवेषे द्वे पश्यन्नित्यस्य कर्मरूपे । तेन च कर्म गुप्तम् । आपाततो 'विकसदि'त्यादि-समस्तपदे सप्तमीविभक्तियोग इति कर्मादर्शनभ्रान्तिः ।

४९ । काननमिति वनमित्यर्थे । का आननमिति पदच्छेदेन च द्वितीयोऽर्थः । तत्पुरि तस्यां मथुरायां का नाधीशस्य भगवतः श्रीकृष्णस्य मालोपहारकं मानामुपदगति ढौकति यत् तदिति काननविशेषणम् । अचेतने चेतनधर्माध्यासः । अन्यत्र अनैषीदिति विषयान्तरे प्रसञ्जयामास । गोविन्द इति एकान्तं कर्तृपदम् । 'नेत्रं रथे चेति विश्वः । द्वितीयार्थश्च नेत्रं स्वस्या नयनं न ऐषीत् नेष्टवती । अपि तु भगवतः श्रीकृष्णस्य मुखे एव दृढबद्धं चकार । 'मालोपहारक'मित्यत्र विशेषणे मालोपहारः के मस्तके यस्येति योज्यम् । 'कं शिरोऽम्बुनो'रित्यमरः ।

सुमनोनिवहामोदि मधुराऽधरपल्लवम् ।
विलासिनेत्रकमलं प्रायच्छद्वदनं(५०) नवम् ॥६६॥ (आदियुग्मकम्)
सागरोदारपरिखा स्वन्तःप्राकारतोरणा ।
रम्यालङ्कारसोल्लासा सा पूः(75a) प्रैक्षि मुरारिणा(५१) (IX) ॥४८॥
उत्तुङ्गा-(५२)दिन्द्रमातङ्गकुलादाप्ता पराभवम् ।
द्विषतः शतमन्योरप्यापि कंसेन या भवम् ॥६८॥ (आदियुग्मकम्)
स्फुरचन्द्रौघमुद्घोषञ्चञ्चदुच्चैःश्रवोगणम्(५३) ।
रत्नाकराकरं कृष्णस्तदापणमजीगणत् ॥६९॥

---

५० । मधुरा कर्त्री तस्मै कृष्णाय नवं रमणीयं वदनं प्रायच्छत् सौष्ठवमयं मुखं प्रादर्शयदिति भावः । मधुरा पुरी पुष्पैः पल्लवैस्तथा विलासिभिश्चाध्युषिता अथच मधुरा नायिका स्वं भाविनं पतिमिव तं स्वं नवं रूपं प्रकटयामास । 'क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः' इति कविभणितिः । नायिकावदनं पुष्पसुगन्धि, तस्या अधरः किशलयरागः, नयने च विलासहावभावादिव्यञ्जके । वदनमिति पुरीपक्षे रूपमित्यर्थे नेयम् । पुरीशस्य संयम्य नवद्वारपुराधिपतेर्भगवतः स्थितस्य वदनं भगवतो मङ्गलमयमाकारं (appearance) रूपञ्च ।

५१ । स्वन्तः शोभनाभ्यन्तरे स्थितैः प्राकारैरिव तोरणैर्वेष्टिता । रम्यालङ्कारा च सोल्लासा चानन्दोच्छ्वसितमुखी चेति विशेषणयोः कर्मधारयेन मथुरा पुरी विशिष्यते । अथच मेखलाहारयष्टिप्रभृतिभी रम्यालङ्कारैस्तथा अस्मयप्राकारलिङ्गेन नायकेङ्गितवेदितया सोल्लासा नारीवेति गम्यते ।

५२ । उत्तुङ्गादिन्द्रमातङ्गकुलादैरावणादेः पराभवं प्राप्ता या पुरी कंसेन द्विषतः शत्रोः प्रबलपराक्रमादिन्द्रादपि भवं निर्भरयोग्यं सत्ताऽऽश्रयं भवनमापि प्राप्ता । आपेगत्यर्थत्वात् प्रयोज्यकर्मणि चेति विभक्तिविन्यासे सामञ्जस्यम् । 'भवः क्षेमेशसंसारसत्तायां प्राप्तिजन्मनो'रिति मेदिनी । 'वज्रप्रभोद्भासिसुरायुधश्रीर्या देवसेनेव पररलङ्घ्ये'ति द्वारकावर्णने माघपद्याङ्कं स्मरणीयम् । ऐरावतादेः पराभवो युद्धव्यापारेण प्राकारादिधर्षणरूपेण ।

५३ । उदघोषं लोककलकलेनोच्चैः शब्दायमानम् । रत्नाकरोऽपि सततं शब्दायते । स्फुरचन्द्रौघं दीप्यमानकर्पूरद्युति । अथवा दीप्यमानेन सुवर्णौघेन भास्वरम् । 'चन्द्रः कर्पूरकाम्पिल्लसुधांशुस्वर्णवारिषु'ति मेदिनी । खनिमुद्भवस्थानमिति यावत् । आकरशब्दस्यापातपौनरुक्त्यपरिहारे 'आकरो निकरे खनौ' इति कोषः प्रमाणम् ।

अप्सरःसंहतिप्रख्याः सरसाः सारसाननाः ।
विलासिनी रतिदृशः(५४)कृष्णोऽपश्यत् पुराङ्गनाः(X) ॥७०॥
प्रेक्षमाणो जन्मपुरःश्रियः प्रासादगोपुरम् ।
पथ्यपश्यत् स रजकं रङ्गं रञ्जितराजकम्(५५) ॥७१॥
कृष्णस्तमूचे वचनं श्रोतॄणामतिरोचनम् ।
वरं वस्त्रं वितर नौ तत्तेऽस्तु भवभाऽवनौ(५६) ॥७२॥
श्रुत्वा कृष्णस्य स वचश्चुक्रोध प्रोल्लुलास च ।
वाक्शरैस्तच्छिरः शूरः शूलेनाच्छिनदीश्वरः ॥७३॥
तमाहत्या निहत्यायमादाय वसनं प्रियम् ।
परिधाय पुरोधाय ज्यायांसमभजद्धियम्(५७) ॥७४॥
विहरन्तावुदारं तावाघ्राय घ्राणतर्पणम् ।
मालाकारगृहं प्राप्तौ (75b) प्रेमपूर्वोपसर्पणम्(५८) ॥७५॥

---

समुद्राच्चन्द्रो मथ्यते चञ्चदुच्चैःश्रवोगणम्, इतस्ततो गच्छद्भिर्बधिरैः समावृतम् । उच्चैः शृण्वन्ति न तु अनुच्चैः कथञ्चनेति उच्चैःश्रवसो बधिराः । समुद्रादपि उच्चैःश्रवोनामाश्वो मथ्यते । तदापणं तस्याः पुरो विपणिम् । समुद्रे एकसंख्यका एते सर्वे, अत्र तु पुरि बहवः । अतः रत्नाकरस्य पराभवहेतुभूतमिति निमित्तप्रौढोक्तिः । 'वणिक्पथे पूगकृतानि यत्रे'त्यादि 'रत्नानि रत्नाकरतामवापे'त्यन्तं माघपद्यमनुकृतमत्र ।

५४ । रतिदृशो रतिवद्दर्शनीयाः । विलासिनीति च्छेदः । विलासिनो नागरजनोचित-शवभावादिविलाससाधनबहुलाः ।

५५ । रङ्गोऽधिकरणवाच्ये कृत्प्रत्ययः । रञ्जितराजकं रजकत्वव्यापारेण सन्तोषित-कंसादिराजसमूहम् । ह्रियमाभजदिति धीरोदात्तनायकयोग्या लज्जाऽत्र व्यभिचारि-भावत्वेन प्रदर्शिता ।

५६ । तस्माद्दानात् रजकस्य तत्तदा तेऽवनौ पृथिव्यां भवभा शिवद्युतिरस्तु । श्रीकृष्णकार्यं मङ्गलायतनमेत्य तथा भवतु ।

५७ । ज्यायांसमग्रजं बलदेवं पुरोधाय सम्मुखे स्थापयित्वा । आहत्या आघातेन ।

५८ । प्रेमपूर्वोपसर्पणं प्रेमपूर्वमुपसर्पणं सञ्चारः सङ्कृतं च तत् यथास्यात्तथाऽन्तर-प्रीतिप्रकटनपुरःसरमित्यर्थे क्रियाविशेषणम् ।

तावालोक्य बलचित्तनैर्मल्यान्माल्यजीवनः ।
प्रणम्योपह्वरे(५९)रङ्गस्तस्थौ भक्तिविभावनः ॥७६॥
गुणकोऽसौ बलं कृष्णमाचचक्षे विचक्षणः(६०) ।
तदागमात् पितॄणां मे स्वर्गोऽभूद् भुवि च क्षणः(६१) ॥७७॥
एतानि नवपुष्पाणि नवपुष्पालिसङ्कृते ।
म्लायन्ति स्म सदामोद(६२) सदामोदप्रदानि ते ॥७८॥
अर्पितानि मयैतानि मयैतानि हितानि ते ।
स्वस्येश वरदामानि वरदाऽमानि दासता(६३) (XI) ॥७९॥
परितुष्टो हरिस्तस्मै ददावनवरान् वरान् ।
दीर्घमायुः स्थिरां लक्ष्मीं वंशमर्काशुभं शुभम्(६४) (XII) ॥८०॥
पुष्पवन्तौ हलिहरी पुष्पवन्तौ यथोज्ज्वलौ ।
सदामानौ पुरो वर्त्म सदामानौ(६५) समीयतुः ॥८१॥
पेक्षिष्ट पुण्डरी[का]क्षः सानुलेपनभाजनाम् ।
कुब्जिकां नैकचक्राख्यां लब्धकंससभाजनाम्(६६) ॥८२॥

---

५९ । उपह्वरे समीपे । 'रहोऽन्तिक उपह्वरे' इत्यमरः । रङ्गो रजको भक्तिविभावनस्तस्थौ भक्तिविह्वलो जातः ।

६० । गुणकस्तन्नामा रजकः । बलं कृष्णं चेत्यध्याहारः ।

६१ । स्वर्गे भुवि च पितॄणां क्षण उत्सवः क्षणकालावधिरूपेण स्थितिश्च ।

६२ । हे सदामोद सतां प्रीतिवर्षणेति श्रीकृष्णसम्बोधनम् । नवपुष्पालिसङ्कृते सद्यः प्रस्फुटितेषु कुसुमेषु भ्रमराणामुचित आसत्रे मेलने, भावे सप्तमी । म्लायन्ति स्म योग्यपात्रेऽर्पणानवकाशात् ।

६३ । अर्पणेन स्वस्य दासता वरदा कृतार्थाऽमानि इत्यन्वयः ।

६४ । अर्काशुभं सूर्यांशुवदुज्ज्वलं कीर्तिबहुलं वंशं सन्तानपरम्परारूपं ददावित्यन्वयः ।

६५ । सदामानौ नित्यं गौरववन्तौ तथा सदामानौ माल्यशोभितौ । द्वितीये पादे पुष्पवन्तौ दिवाकरनिशाकरावित्यर्थः । पुष्पस्यावन्ताविति विग्रहेपात्वात् शकन्ध्वादिरूपेति कश्चित् । 'रविशशिनौ पुष्पवन्ता'विति नाममालापर्याये ।

६६ । नैकचक्राख्याम्—इयमाख्या पुराणेषु लभ्यते । लौकिकाख्याने इयं कुब्जेति सामान्येनैव प्रसिद्धा । इतरनारीवत् सम्भोगलालसा न तु व्रजगोप्य इव साधनावना भगवतः स्वशक्त्यात्मकाः ।

यथाचेन्दीवराक्षीतो लक्ष्मीनाथोऽनुलेपनम्(६७)।
आव-(76-77a)योर्गात्रसदृशं देहीति स्मरदीपनम् ॥८३॥
यथेष्टं(६८)प्रियमादत्स्वेत्युदितः स तथा बलम्।
शीतेनालेप्य शुद्धेन सुष्ठामोदं ययावलम् (XIII) ॥८४॥
कुब्जत्वं वीक्ष्य तस्याः स व्याहारव्यवहारयोः(६९)।
ऋजूर्ध्वं स्कन्धमापीड्य द्व्यङ्गुलेनाङ्गमानमत् (XIV) ॥८५॥
कृष्णस्पर्शाल्लसत्कामा सत्कामाऽथेदमाह सा(७०)।
धृतैतदंशुकान्तांशुकान्तोऽस्मद्गेहमाव्रज ॥८६॥
श्रुत्वैतद् वाक्यमादत्त दत्ततालो बलेन(७१) सः।
कंसं हत्वैष्यामि सह सहते नो बलेन सः(७२) ॥८७॥

---

६७। इन्दीवराक्षीतः कुब्जासुन्दरीसकाशात् लक्ष्मीनाथोऽजहल्लक्षणया श्रीकृष्णः 'श्रियः कान्ता' इत्यादि ब्रह्मसंहितावचनात् गोपीषु श्रीत्वमुपचर्यते। अथवा लक्ष्म्या रुक्मिण्या नाथः पतिः 'राघवत्वेऽभवत् सीता रुक्मिणी कृष्णजन्मनी'ति पुराणप्रमाणात्। अनुलेपनं माल्यादि ययाच प्रार्थितवान्। क्रियाफलस्य कर्तृभिन्नेतरगामित्वात् परस्मैपदव्यवहारो युक्त एव।

६८। यथेष्टं यथाप्रार्थितं यथारुचि चेति तया कुब्जया उक्ता। बलं बलदेवं शुद्धेन शीतेन तेनानुष्णेनेममालेप्य अलमत्यर्थमामोदमानन्दं ययौ प्राप। चन्दनस्य शैत्यं वस्तुसिद्धं, तेन चर्चा च कविसमयसम्मता।

६९। व्याहारव्यवहारयोरुक्तिचलनाद्योः। व्याहारे कुब्जता नागरनायिकासुलभा। ऋजु सरलं यथा स्यात्तथा अङ्गमूर्ध्वमानमत् ऊर्द्ध्वदेशे नमितवान् अन्तर्भावितण्यर्थां क्रिया।

७०। सत्कामा सन्तं शोभनं कान्तं श्रीकृष्णं कामयमाना। एतस्य दुकूलस्यान्ते प्रान्ते यऽशुर्दीप्तिमान् रश्मिस्तत्प्रवाहधारा ( अशेर्व्याप्त्यर्थत्वादन्वर्थताऽत्र ) तया कान्तश्चेतोहारी।

७१। बलेन बलरामेणोल्लसितेन दत्तः तालो यस्मै। तालश्छोटिका। हत्वैष्यामि सहेति छन्दःशैथिल्यकृताऽवद्यता। स च सह सहते इति यमकानुरोधात् सहनीयः। अत्र श्लोकत्रये यमकोपक्रमः प्रकरणाल्लभ्यते।

७२। सः कंसो नो आवयोर्द्वयोर्बलेन तथाऽप्रमितेन शौर्येण हेतुना सहते स्पर्धते। इति तस्य स्पर्धामपनेष्याव इत्याशय।

इत्युक्तयाऽमुक्त तया(७३) तथा मुक्तचतुर्भुजः ।
कंसस्य धनुषो धाम(७४) स जगाम सहाग्रजः ॥८८॥

महो महान् यदुल्लस्य कंसेनारम्भि दम्भतः ।
रक्षकः पुण्डरीकाक्षं पृष्टो व्याचष्ट तत्त्वतः(७५) ॥८९॥

जरठकमठपृष्टं निन्ददीशो दृढ़िष्ट(७६)
धनुरन[म]दधृष्यः सावहेलं विकृष्य ।
ध्वनितनगनिकुञ्जश्चित्रपुञ्जम्बभञ्ज
द्रुतमथ सहरामः स्थानमिष्टं जगाम ॥९०॥

खण्डं खण्डं कृतमिति तत् कोदण्ड(७७)
दृष्ट्वा रक्षी हलिहरिहत्याकाङ्क्षी(७८) ।

---

७३। तया कृष्णोऽमुक्त मोचितः । अमुक्तचतुर्भुजश्चतुर्भिर्भुजैर्यथोचितायुधादिधारी इत्यकारप्रश्लेषेऽर्थः । अथच मुक्तचतुर्भुजो भगवान् विष्णुरपि स चतुर्भुजत्व-विरहितो द्विभुजो नररूपधारी नरवद्व्यवहर्ताश्च कृष्णरूपेण प्रसिद्धः ।

७४। कंसस्य नरपतेः धनुषो धाम धनुर्गृहम् । 'गृहदेहत्विटप्रभावा धामाणी'त्यमरानु-शासनात् । अत्र यमकस्य ग्रहणे त्यागे च चारुत्वसमीक्षा नैषधादि पद्येष्विव सङ्गमनीया । तथानन्तरश्लोके लक्ष्यव्यः प्रम्यः ।

७५। दम्भतो मदभरात् कंसेन दक्षप्रजापतिनेव महान् विपुलाडम्बरो मह उत्सवो यज्ञप्रपञ्च आरम्भि आरब्धः । इति रक्षी प्रतीहारस्तं तत्त्वतः प्रकृतं तथ्यं व्याचष्टेत्यन्वयः । सार्वविभक्तिकस्तसिः ।

७६। धनुः परिणतकूर्मपृष्ठं निन्दत् तदतिरेकि कठोरं चिक्कणं दुर्विभञ्जञ्चेत्ति । ध्वनितनगेत्यादि चित्रपुञ्जमिति च क्रियाविशेषणे चित्रकर्मणां पुञ्जं समाहारो यत्रेति तत् यथा स्यात्तथा ।

७७। खण्डं खण्डमिति खण्डश इत्यर्थे क्रियाविशेषणे द्वितीयाविभक्तियोगः । एवमपि रूपेणार्थेन च मार्कण्डेयसप्तशत्यां 'खण्डं खण्डं च चक्रेण वैष्णव्या दानवाः कृता' इति ।

७८। हलिहरी बलदेवश्रीकृष्णौ । तयोः हत्याकाङ्क्षी हत्यार्थम् प्रभुणाऽदिष्टस्तत्र प्रयातपरश्च ।

सर्वं कंसं सपदि समेत्याशंसत्
सोऽनिद्राक्षी(७९) दिशि दिशि तावद्राक्षीत् ॥६१॥

इति **हरिचरिता**ख्ये नव्यसत्काव्यमुख्ये
प्रसरदमृतधारे वर्णितेशावतारे ।
कृतकलुषनिरासे तुष्टबालाविलासे
कृतिरनुगुणभूषा(८०) द्वादशः सर्ग एषा ॥

---

७९। जलधरमाला वृत्तम्। अनिद्रे अक्षिणी इति कर्मधारयः। ते विद्येते यस्येति व्रीह्यादित्वादिनिः। 'न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेदर्थप्रतिपत्तिकर' इत्यनुशासनादनिद्राक्षी इतीमनिच्प्रत्ययनान्तं पदमसाधु। यमकानुरोधात् प्रयोगः कथमपि सोढ़व्यः। एवमप्यपन्यत्रात्र काव्ये यथा द्वितीये ६१तमे पद्ये 'तन्मयं जगदवबोधि केवल'मिति। तत्र च टिप्पनीतस्तात्पर्यं द्रष्टव्यम्।

८०। अनुगुणभूषा यथायथैर्गुणैरलङ्कारैश्च संघटिता। अथ च भूषा सौन्दर्यम् 'सौन्दर्यमलङ्कार' इति वामनवचनात् विच्छित्तिमात्रे वर्त्तते। अनुगुणा सदर्थस्योत्कर्षमात्रस्याधारतया काव्यस्योपगिनी।

# हरिचरितम्

## त्रयोदशः सर्गः ।

धनुःप्रवरभङ्गतः सदर-(१)मस्तदम्भङ्गतः
सुरद्विरदसन्निभं धृतिसुतस्थिरः सन्निभम् ।
बलं कुवलयाह्वयं मनसि सन्निधायाह्वयन्-
नितान्तमदधोरणाधिकरणान्निजाधोरणान्(२) ॥१॥

बभूव भूवलयलयत्तितित्तितिः
प्रभाप्रभाविह विहतोदयेदये ।
सदा सदादयदयः सन्निभा निभा-
हिता हितान् पुरुपुरुषान् रुषाऽन्वशात्(२) ॥२॥

मत्तो मत्तोरणरणभुवि स्वैर्भवद्भिर्भवद्भि-
र्दानादानाकुल-(78a) दलद्लिश्रीसदम्भः सदम्भः ।

---

१। सर्गोऽयमपि नानाच्छन्दोमयः। आद्यश्लोके पृथ्वीच्छन्दः। एवं १९तमे श्लोके। धृतिसुतस्थिरो युधिष्ठिरवदविचलितमतिः। नेदं विशेषणं कंसस्य स्वभावत उपयोगि परन्त्वत्र तस्यस्थिरप्रतिज्ञत्वमभिलक्ष्यैवं प्रयोगः। अस्तदम्भमून्मूलितस्वाभिमानं यथास्यात्तथा दरं गतो, भयमवाप्तः। 'दरोऽस्त्रियां भये श्वभ्रे' इत्यमरः। बलं स्वकीयविभवऽस्याप्नोति बलवन्तं कुवलयाह्वयं कुवलयापीड़संज्ञमिभं सन्निभ शोभनं शस्तञ्च हस्तिनं मनसि नितान्तमदधोरवणाधिकरणात् सन्निधाय। निजानाधोरणान् हस्तिपकान् आह्वयत् आकारितवान्। 'ण्यर्थेऽन्तर्भावितणिजर्थः।

२। रुचिराच्छन्दः; एवं २१।४० श्लोकयोः सन्निधाय 'सदाशयदायसाय सन्निभा रुषानुशात्' मा पाठः। टीका परिशिष्टे द्रष्टव्या।

शौण्डः शौण्डभ्रमरमणतो व्यस्तविश्वस्तविश्व-
श्रेयः श्रेयस्करकुवलयापीड़ उच्चैल उच्चैः(३) ॥३॥
रङ्गद्वारं प्रविशति रामे वामे(४)कृष्णे विजयसतृष्णे ।
नागेनोभौ विभवसलोभौ शूरम्मन्याविभतलहन्या(?) ॥४॥
अद्धा नीरन्ध्रमान्ध्रं विपुलबलमथ प्रेमपीयूषपूरं
शूरं चाणूरमुच्चै रतिरचितमनस्तुष्टिकं मुष्टिकं च ।
मन्दं मन्दं क्षणाढ्यं परिवृतदृढ़कुत्तोषलं तोषलं च
सर्वानाहूय कंसः प्रियवचनचयानाचचक्षेऽधिकं(५)सः ॥५॥
मन्दा भवन्तो हि समानभोगा मन्दाभवन्तोऽहिसमानभोगाः ।
न वस्तुलाभं गमिताः समस्ता न वस्तुलाभं गमिताः समस्ताः(६) ॥६॥
पलायमानेन विहाय साहस-म्पलायमानेन विहायसाऽहसम् ।
पुरन्दरेणापि हितेन वस्तुतः पुरन्दरेणापिहिते नवस्तुतः(७) ॥७॥

---

३। मन्दाक्रान्ताच्छन्दः। 'भुविविस्वैर्भवद्भिर्दनादनो' श्रेयः श्रेयक्षर' मा पाठः। अत्रापि टीका परिशिष्टे दर्शिता।

४। वामे प्रतिकूले। मत्ताच्छन्दः। शूरम्मन्याविभालतहन्याः मा. पाठः; अन्त्यानुप्रासबन्धार्थमिभतलहन्य इति परं प्रकरणत इभतलहन्यौ इति पाठः स्यात्। इभतलहन्यौ हस्तिपदतले निक्षिप्य मारयितव्यौ। रामे कृष्णे चेत्यध्याहारः।

५। स्रग्धराच्छन्दः। परिवृतदृढ़कुत्तोषनं माः पाठः। अद्धा तत्त्वतो नीरन्ध्रं घनश्लिष्टकायं विपुलबलं प्रेमपीयूषपूरं प्रभुं प्रति प्रीत्यमृतेन पूर्णम्। 'पूर' शब्देनापि देहस्य घनसन्निविष्टता व्यङ्ग्या। आन्ध्रं शूरमन्ध्रदेशीयं मल्लं चाणूरं य रत्या प्रभुभक्त्या रचिता तुष्टिर्येन। समासान्तः कप्। तादृशं मुष्टिकं मल्लं मन्दं मन्दं धीरस्वरेण क्षणाढ्यमुत्सवगौरवेण समृद्धमनाडम्बरपूर्णेन भावेन परिवृतदृढ़कुत्तोषलं न केवलं स्वयमपि तु परिजनवर्गेणापि तु प्रभुसमानतया सन्तोषहारकं तोषलञ्चाहूये-दमनन्तरश्लोकपञ्चकेन परामृष्टमधिकं बहुमानसूचकं च वचनमाचचक्षे उवाच। स कंस इति कर्तृख्यापनम्।

६। उपजातिच्छन्दः। ६—१० श्लोकानां टीका परिशिष्टे द्रष्टव्या।

७। वंशस्थविलं छन्दः।

केवलं जलधियोजितगोत्रा-(78b)वासिनोऽत्रभवतां न विदुर्वा ।
केवलं जलधियो जितगोत्रा वासिनोऽत्र भवतां न विदुर्वा(८) ॥८॥
मम पुरे वसुदे वसुदेवजौ कृतपरोपरमौ परमौजसौ ।
हलिहरी सहसा सहसाऽऽगतौ मदहिताविह तौ विहतौजसौ(९) ॥९॥
धाम धामवरगोपुरं पुरं राज्यराज्यपि(II)लसद्धराधरा(१०) ।
भूरि भूरि च ममास्तु वस्तुतस्तौ हतौ हत मया समं समम् ॥१०॥
दानवान[ति]रिच्य दानवान् मानवान् स विससर्ज मानवान्(११) ।
भासनान्ननिववृते सभाऽऽसनात् रङ्गतश्च शयनं परङ्गतः(१२) ॥११॥
निद्रा विद्राविताऽभीक्ष्णं तस्याक्ष्णोर्वसता सदा ।
कृष्णेन स्वान्तसंस्थेन दृष्टा निष्णातयोगिवत्(III) (१३) ॥१३॥

---

८। स्वागता छन्दः। एवं १०म श्लोके।

९। वसुदे धनदायिनि पुरे स्वतः वाणिज्यादिवृत्तेरुपरिकरादानात् प्रचुरकरदायिनि। परमौजसौ बलातिशयवन्तौ। मदहितौ मम शत्रू। इह तौ विहतौजसौ स्यातामित्यध्याहारः। सहसा बलेन दुःसाहसेन चेत्याकूतम्। कृतः पराणां शत्रूणां मम सपक्षाणां पूतनाऽदीनामुपरमो मृत्युना विनाशो याभ्यां तौ। पक्षान्तरे पूर्वार्धे 'निर्वाणवैरदहना' इत्यादि वेण्यां प्रस्तावनाश्लोक इव विपरीतोर्थऽस्तात्त्विकः सूचितः। तत्र पर उपरमः परा निर्वृतिः शान्तिः परमोजः स्थिरांशो भगवत्तयो-भयोरिति व्याख्या।

१०। राज्यराजि राज्ये शोभमानमपि। धाम स्थानं राजधानी। धामवरगोपुरं धाम्नः प्रासादस्य वरं श्रेष्ठं गोपुरं तोरणं यत्र। लसद्धरा लसन्ती धरा काञ्चनादिसम्पत्त्या पुष्टिर्यत्र तादृशी धरा भूमिः। 'धरा मेदोभूमिजरायुष्वि'ति हैमः। यद्वा लसन्तः शोभमाना धराधराः शैलाः यत्र तादृशा धरा मया सह समं समकालमेव हतौ।

११। दानवान् दानवश्रेष्ठं बलिमित्यर्थः। अतिरिच्य दानवान् ततोऽप्यधिकं दानवान्। दानवान् मानवानिति द्वे कंसविशेषणे। इति निदिश्य इत्थमाज्ञाप्य। परमिति वाक्यारम्भे। रथोद्धता छन्दः। एवं ३२,३९,५०,५७,५८,७३,७९ तमेषु पद्येषु।

१२। भासनात् निववृते स्वकीयोचितदीप्तितो निवृत्तः। आकुलया स्वकीयमुद्वेगं प्रकटयामासेति यावत्। भाषणादिति मूर्धन्यव्यञ्जनमयपाठे भाषणान्निवकृते तूष्णीं बभूव। तथात्वे यमकभङ्गः।

१३। निष्णातयोगिवत् परिपक्वयोगारूढसाधकेनेव अभीक्ष्णमत्यर्थं विद्राविता पलायितुं

रतिपतिमतिपत्य भासमानं
शरदिजवृत्तशशिप्रभासमानम् ।
निजतनुतुलितैलमीलमाना—
स्तमुपययुः प्रमदा निमीलमानाः(१४) ॥१३॥

अथ काञ्चन काञ्चनकान्तरुचिं
प्रति सम्प्रति सम्प्रतिपद्य रुचिम् ।
अवलोऽक(व)लोकनमाप्य दधौ(79a)
तदमुञ्चदमुञ्चदमूरुदधौ(१५) ॥१४॥

जितकैरवबान्धवं धवं
यदमन्यत समन्ततस्ततः ।
तुहिनांशुरमुं मुहुर्मुहु-
र्निजतेजोभिरतीतपत्तपः ॥१५॥

नवराजकलाऽग्रयसुन्दरी-
वदनेन्दुद्युति विस्मयोषितः ।
नवराजशशिप्रभासुरः
सुचिरं पीड़यति स्म योषितः(१६) ॥१६॥

---

प्रयोजिता निद्रा दृष्टा । स्वान्तसंस्थेन मनसि परमोद्वेगकारणत्वेन सदैव तिष्ठता । एवं २।६१, १०।९१ पद्ययोरपि भावावगूरणम् ।

१४। वृन्तशशिप्रभासमामिति मा. पाठः । स्मितनिजतन्वा तुलितं मा. पा । पुष्पिताग्रा वृत्तम् । एवं २०, ३८, ५१, ९९, ७२ तमेषु श्लोकेषु । शरदिजवृत्तशशिप्रभासमानं शारदवर्त्तुलचन्द्रगोलकतुल्यं पूर्णिमाशशिप्रभम् । निजतनुतुलितमैलं देहकान्त्या इलातनयस्य पुरूरवसः स्पर्धिनम् । ईलमाणा ईड़मानाः सेवमानाः । ईडि पूजायामिति धातुपाठः । निमीलमानाः सेवाऽऽवसादेन निमीलितदृष्टय इव ।

१५। अत्र श्लोके तोटकं वृत्तम् । 'उदयत्प्रमीलयोः स्वदृशोरिवे'ति वर्णनं नैषधेऽत्र तुलनीयम् । काञ्चनकान्तरुचिं सुवर्णवर्णा काञ्चित् प्रति रुचिं मनोनिवेशं प्रतिपद्य प्राप्य । दृष्ट्याऽवलोकनमाप्य अवलोऽवशो रूपाकृष्टत्वात् परतन्त्रः । अमूः प्रमदाः पूर्वश्लोकपरामृष्टा उदधौ विस्मृतिपारावारेऽमुञ्चत् । तत् अवलोकनममुञ्चत् तां प्रति दृष्टिनिक्षेपं चकार । कामाविष्टानामयं स्वभावः ।

१६। श्लोके 'सुन्दरी'पदप्रयोगेन छन्दसो नामापि ।

कन्दर्पतः सुरमणीयतनुः पतिर्यः
कन्दर्पतश्च्युतमयं विदधाति नोऽति ।
भावादयं सममदाः प्रमदाः स्म तत्त्वा-
भावादमञ्जुलतरो मदनो दुनोति(१७) ॥१७॥

तमथ प्र[थित]-प्रजागरं(१८)
गुरुचिन्ताजनितप्रजागरम् ।
उषसीन्दुसमप्रभेऽजिरे
स्तुतिभिर्वन्दिवराः प्रभेजिरे ॥१८॥

सहस्रशतसम्मितप्रवरवन्दिवृन्दोदित-
स्तवस्तवकसंवृतेऽम्बरतलेऽपरस्याः स्तुतेः ।
भवेदनवकाशता यदि तु न क्षणध्वंसिता
तदस्य कविसम्मताऽस्थिरमतेश्च नामूर्तता(१९) ॥१९॥

स-ऋ-ग-म-प-ध-नि-ध्वनि-प्रधनैः
परमनरैः रसमूर्च्छनाऽवधाने ।
इह बत वलिते सुधाऽक्तगीते
किमु किन्नरगीति-(79b)भिस्तुलाऽस्ते(२०) ॥२०॥

---

१७। भावादयं सततदा प्रमदा···मा. पाठः। एवं ३३ तमे श्लोके।

१८। प्रथितो वृद्धिमितः प्रजानां गरो रोगः क्लेश इति यावत्। वसन्ततिलकं छन्दः। 'गरस्तूपविषे रोग' इत्यनेकार्थसंग्रहे। पादान्तयमकम्। उषसोऽजिरेण सहाभेद-विवक्षायां रूपकम्। अजिरस्य स्वच्छधवलत्वं तत्र हेतुत्वेनोपन्यस्यते।

१९। पृथ्वी छन्दः। लक्षसंख्यैः प्रवरवन्दिवृन्दैर्देवादिभिः कर्तृभिः स्तवस्तवकैः समष्टि-बद्धाभिः स्तुतिभिः करणैः संवृतेऽम्बरतले गगनेऽपरस्याः स्तुतेरनवकाशता स्थानाभावो यदि स्यात् यदि वा शब्दत्वात्तासां क्षणध्वंसिता न स्यात् तत्तदाऽस्य प्रकृतस्यास्थिरमतेर्बौद्धमतक्षणस्थायित्वात् अथ च कंसस्याप्यनवस्थितचेतसोऽमूर्तता कविसंमता स्तुतीनां शरीरित्वं सिद्धं स्यात्। यथा सङ्गीतशास्त्रे रागरागिणीनां विग्रहवत्त्वमुपन्यस्तं तथा। एवं महिम्नः स्तोत्रे आद्ये पद्ये···'ममाप्येष स्तोत्रे हर निरपवादः परिकर' इति।

२०। ध्वनिप्रधनैः ध्वनिसंघातैः। परमनरैर्विग्रहवद्भिर्देहधारिश्रेष्ठैर्विहिते कृते किमिवति निन्दासूचकप्रश्नावतरणम्। किन्नरनरातिशायि वन्दिनां गीतिमाधुर्यम्। परमनरैः नरमतिशयानैः किन्नरैरित्यपि। सुतया अक्ते सिक्ते सुधावर्षिणि परममनोहरे।

अथ क्षणाद्विविधविचित्रलक्षणाः कृतक्षणाः प्रवरराज्यरक्षणाः(२१)।
वराङ्गनाः सरभसमा नृपाङ्गना न्महारणा व्यतिययुरा च तोरणात् ॥२१॥
विपुलफलकलक्ष्ये निर्मलेऽत्रान्तरीक्षे रजतकनकधुर्याः कम्पिताश्चन्द्रसूर्याः।
अतिशयितमराजन् सेविनुं कंसराजं भयभृत इव मायाकम्पितानेककायाः(२२)॥२२
शिखिपुच्छगुच्छरचितैर्वर[व्रजैः] सततं समुल्लसितचन्द्रक[व्रजैः]।
[इह] साध्वनृत्यत सहस्रलोचनै-रिव तन्प्रियाय बहुदेहरोचनैः(२३) ॥२३॥
अथ रङ्गतोरणमरङ्गतो रणं प्रभुसारवारणमरातिवारणम्।
निदधे स माधववधाय माधवं रसपूरमादददम शूरमाददम्(२४) ॥२४॥
निषादिवृन्दाय ततः प्रदाय धनानि रत्नानि च तानि तानि।
स सादरं वाचमिमामुवाच द्रुतं जहीभेन हरिं शुभेन(२५) ॥२५॥
ततः समाजं बहुरत्नभाजं गुरोरुदीर्णं परमप्रकीर्णम्।
(80a)पुरैकदेशं शुभसन्निवेशं स यादवेशः सचिवैर्विवेश(२६) ॥२६॥

---

२१। अथाचिरादेव यथासमयं निर्दिष्टागमना विचित्रलक्षणसमन्विताः प्रवरराज्यरक्षणाः प्रवरस्य सर्वाधिपतेः कंसस्य राज्ये रक्षिता वराङ्गना आ नृपाङ्गनात् राजसभाचत्वरात् आ च तोरणात् द्वारदेशपर्यन्तं व्यतिययुरन्योन्यान्वयेन समवेताः। महाऽरणाः श्रेष्ठशरणाः ऋतावित्यनुशासनात्।

२२। मालिनीच्छन्दः। एवं ६६ तमे पद्ये। अन्तरीक्षे कनकवर्णो रवी रजतवर्णश्चन्द्रश्च कनकरजतवर्णा धुर्वाहा वृषश्रेष्ठा इव कायव्यूहं विदधतो भयभृतो त्रिलोकपतिं कंसमसेवन्त यथा कुमारसम्भवे ते देवा दैत्यपतिं तारकम्।

२३। अत्र मञ्जुभाषिणी छन्दः। एवमनन्तरे श्लोके। सहस्रलोचना इन्द्रः स च कायव्यूहं विदद्बहवः शिखिनो मयूरा इवात्यत्कटं नृत्यन्ति स्म। व्रजा एकत्र गोष्ठाणि अन्यत्र समूहाः "व्रजो गोष्ठाध्ववृन्दे"ष्वति मेदिनी। बहुदेहरोचनैरनेकाकारस्पृहयालुभिः।

२४। रङ्गतोरणमरं अलं रणं गतः युद्धरतः। प्रभुसारवारणं प्रभोः कंसस्य श्रेष्ठं हस्तिनं रसपूरं वसन्तोचितं सरसहकुमारतया पूर्णं शूरमाददं वीराणां मत्ततादायिनं माधवं तदाख्यहस्तिनं कृष्णवधाय नियुयोज।

२५। उपेन्द्रवज्रा वृत्तम्। एवं २६,२९तमयोः श्लोकयोः। शुभेन शोभनाकारेण इभेन हस्तिना।

२६। स्वकीयगुरोर्निदेशेनोदीर्णं वितायमानं समाजं सभास्थानं विवेश।

कैलासलीलां परितो विशालां दधद्भिरुच्चैर्वृतमुच्चमञ्चैः ।
मेरूपमञ्च स्फुरदंशुमञ्चत् सुखप्ररोहं स्वयमारुरोह (२७) ॥२७॥
सूरोऽपि दूरं मम तेजसा जितो [नूनं] भिया सम्प्रति चन्द्रमायते ।
बालाहकी भीरिति भास्करोदयं किं मृत्युकाले समपश्यदागते(२८)(II) ॥२८॥
गुणैरुदारा नव राजदारा विहारमञ्चानुरुभित्तिमञ्चाः ।
सञ्चालिवर्गाश्च सहाङ्गजाताः समं पुरादारुरुहुः प्रयाताः(२९) ॥२९॥
मञ्चेषु पञ्चेषुसमानरूपाः परःसहस्रेष्वपरेषु भूपाः ।
शूरानवैक्षन्त दिदृक्षयाऽऽरात् परेषु पौरान्यविशन्त दूरात्(V) ॥३०॥
मञ्चप्रान्ते बत वसुदेवः कंसात् भीतो विगतमुदेव ।
अक्रूरेण [सममत्रा]सीन्नन्दो गोपैः सहस इवासीत् ॥३१॥
नागरीजनसमूहमध्यगा देवकी हरिहतप्रभाऽभ्यगात् ।
अन्तकालगतपुत्रसन्मुखा-(80b लोकनप्रमदमानसोत्सुका(VI) ॥३२॥
चाणूरमुष्टिकुरःसरमल्लवृन्द-स्तत्राभिगम्य बहुरम्यतरं ववन्द ।
भेरीमृदङ्गवरडिण्डिममञ्जुशब्दै-र्भूर्मिश्चचाल विनदद्भिरिवालमब्दैः ॥३३॥
तत्रातुलाद्भुतविलोकनलोललोक-कोलाहलेन सकलः प्रचचाल लोकः ।
श्रुत्वैव तं हलधरेण समं समाज-द्वारं वरद्विरदभाग् भगवान् बभाज(३०) ॥३४॥
तत्र हस्ततलतालनस्व[ना-दर्शि]तेन मददुष्टवर्ष्मणा(VII) ।
प्रैरयद्रिपुरुभौ तथा तथा हस्तिनैव तमताडयद्यथा (३१) ॥३५॥

---

२७। भङ्ग्या कैलासपतिः शिवः मेरुमधिशयानो देवराज इन्द्रश्च देवौ कंसेनैकेनैवानुकृत इति ध्वन्यते ।

२८। तमथाज्ञाप्य दृष्ट्वा च मञ्चान् सर्वानुपाकृतान् । आसन्नमरणः कंसः सूर्योदयमुदैक्षत ॥ इति विष्णुपुराणे । बालाहकी मेघकृतदुर्दिनसम्बन्धिनी भीरिति हेतुनिर्देशः ।

२९। पुरात् लक्षणया स्वकीयान्तःपुरप्रासादादङ्ग्जाताः ससख्यः सात्मजाश्च यथायथमुरुभित्ति विस्तीर्णकुण्डदेशं मञ्चप्राचीरं प्रति अञ्चाः गमनशीलाः (अञ्चेः पचाद्यच्) कंसस्य नवसंख्यकमहिष्यो विहारमञ्चानारुरुहुरित्यन्वयः ।

३०। सकलो लोको रङ्गागता दर्शका इति यावत् । अद्भुतदर्शनजातचाञ्चल्यजनितेन लोककोलाहलेन जनकलरवेण ।

३१। हरिणीच्छन्दः । प्रकृष्टानां हस्तिनां कुम्भेभ्यो मुक्ताफलान्युद्भवन्तीति प्रसिद्धिः । उदपीपटदुदजीघटदिति च णिजन्तलुङ् प्रथमपुरुषैकवचने रूपे । लीलामात्रादवलीलाक्रमेण ।

अथ कुवलयापीडे पीड़ां विधातुमुदारधी-
स्तदनुगनरान् लीलामात्राद्धरिः सहसाऽवधीत्।
सपदि स पदाघातादन्तावुभावुरुपीपट-
स्तदभिहतितो मुक्ताः कुम्भस्थलादुदजीघटत्(३२) ॥३६॥

निपतिता द्विरदस्य निषादिनः पृथुलपृष्ठगतान् स विषादिनः।
समभिहत्य गजेन्द्रमुदायुधः शुभसमाजमयात्(81a) सहलायुधः ॥३७॥

द्विरदरदगदाधरौ तदोभौ गजमदरक्तकृताङ्गदादिशोभौ।
रणभुवि चरतस्तदाऽधिकान्तौ गगनगताविव चारुपुष्पवन्तौ (३३) ॥३८॥

सगर्वलीलावनिताऽवलोकनौ विराजमानौ हलभृज्जनार्दनौ
मृगेषु मध्ये हरिवद्रणाङ्कितौ न लङ्घितौ केन पथेत्युपस्थितौ(VIII) ॥ ३९॥

पृथूरसौ तपनसहस्रतेजसौ बृहद्भुजौ द्युतिजितसर्वभूभुजौ।
प्र[रो]चनौ कमलदलाभलो[चनौ] जनैस्तुतौ(३४) सकलकलैरिति स्तुतौ ॥४०॥

पूतनामयमहन् स्तनपानात् बाल एव शकटं पददानात्।
निर्बभञ्ज यमलार्जुनसारा-देष कालियमकालयदारात्(३५) ॥४१॥

मग्नमेष किल यादववंशं संविधाय धरणौ निजमंशम्।
उद्धरिष्यति हरिद्गुरुबाहुः(३६)सत्पुराणविद एवमिहाहुः ॥४२॥

मूर्ध्ना धरामेव बिभर्ति शेषः प्रसूनमालामिव साद्रिजालाम्।
वज्राभमुष्ट्यैव जघान(81b)तुष्ट्यै बलः प्रलम्बं जगतोऽविलम्बम् ॥४३॥

हलिहरिस्तवनामृतपानतः स्थविरता विरता वसुदेवतः।
स्नुतपयोधरयाऽस्य च योषया मृदुभयादुभयाननमैक्ष्यत(X) ॥४४॥

---

३२। तालनात् ताड़नादित्यर्थ डलयोरनुप्रासार्थव्यत्ययः।

३३। अत्र (यथा प्राक्) सूर्यचन्द्रयोः परामर्शः।

३४। तु पक्षान्तरे। यथैकपक्षे बलकृष्णयोरतर्कितमागमनं तथा पक्षान्तरे जनैः समागतैर्भक्तिभरावनम्रैः।

३५। स्वागताच्छन्दः। अकालयदमारयदिति यावत्।

३६। हरिद्गुरुर्दिक्पालः 'दिशश्च ककुभः काष्ठा आशाश्च हरितश्च ताः' इत्यमरः।

हरिवक्त्रसरोजवीक्षणा-न्मुदिता नागरभीरवः क्षणात् ।
इदमूचुरथो परस्परं हरिभक्त्याकलनापरस्परम् (XI) ॥४५॥
हरेर्मुखं पश्यत पश्यतालयः स्फुरत्यदो लोचनखञ्जनालयः ।
करीन्द्र[माथ]श्रमजात् कणोक्षितं [वि]भात्यलं किं हिमबिन्दु लक्षितम्(३७) ॥४६॥
तुषारदुग्धेन्दुमृणालशोभनं सङ्कर्षणं पश्यत चित्तरोचनम् ।
मल्लैः समं युद्धविधौ समुत्सुकं प्रकृष्टतुष्टिं जगतो विधित्सकम् ॥४७॥
चाणूरमल्लमयमाह्वयते स्म कृष्णः शैलोपमं शिशुरपि प्रधने सतृष्णः ।
किं नेह सन्ति बत युद्धविधानविज्ञा यत् कुर्वते प्रबलबाणरणेष्ववज्ञाः ॥४८॥
तं तदाहवदराङ्कितं तदा माधव-(82a)प्रियमुवाच माधवः ।
सादयाम्यहमरौ न सा दया दृश्यतां लघुतयाऽस्य दृश्यताम्(३८) ॥५३॥
वचनमिदमुदीर्य सारवीर्यः रणभुवि प्रबबन्ध(३९)यतत्क्षणेन ।
प्रतिपदमिह यन्न भूर्विशीर्णा भगवत एव हि तज्जयस्वनेन ॥५१॥
चा रमल्लोऽथ हरिं ससर्प क्षितिक्षितोऽभ्यर्चनयाऽत्तदर्पः(४०) ।
हरिश्च तैस्तैर्विविधैः प्रकारै-रमुं जघानोरुतरैः प्रहारैः ॥५२॥

---

३७। करीन्द्रस्य कुवलयापीडाख्यस्य माथे निपाते यः श्रमस्तज्जनितात् । कणोक्षितं हिमबिन्दु । आलयः सख्यः । एवं नागरभीरूणां मथुरापुरनारीणां परस्परं वितर्कसहिता उक्तयः ।

३८। तदाहवदराङ्कितं तेन सहासन्नायुद्धात् भीतं माधवप्रियं मधूत्थमद्यपानोल्लसितं तन्नामहस्तिप्रियं कंसं वा । 'तास्तदाऽत्रदारातिङ्कतास्तदा' मा. पाठः ।

३९। अहमरौ दृश्यतां सादयामि दर्शनीयतां नाशयामि न स पुनरपि लोकनयनदृश्यः स्यादिति यावत् । अरौ विद्वेषिणि शत्रौ सा मम जगत्प्रथिताऽद्वया करुणा न दृश्यतां भवद्भिः, भगवदाविर्भावस्य 'विनाशाय च दुष्कृता'मिति कारणस्मरणात् । गर्भितत्वं वाक्यदोषः । यत् सारवीर्यो भगवान् क्षणेन सद्यः प्रबबन्ध बद्धपरिकरोऽभवत् यच्च भूर्न विशीर्णा इति द्वयोर्यच्छब्दयोरेकेन तत्पदेन सम्बन्धश्चतुर्थे पादे ।

४०। क्षितिक्षितो भूभृतोऽभ्यर्चनया सेवया कर्तरि कृत्योगा षष्ठी । आत्तदर्पो दर्पोद्धतः ।

बलहानिरभूत् क्षणे क्षणे वर[मल्ल]स्य [सदस्यल]क्षणे(XII)।
ववृधे तु बलेन केशवस्तदभूत् कंसनृपो यथा शवः (४१) ॥५३॥
वादित्रवृन्दानि समं सुपीवरं दिवि त्ववाद्यन्त सुरानुगैर्वरम्।
अवादि देवैर्जहि सत्वरं हरे द्विपं द्विपं[घ्नन्ति] वने यथा हरेः(४२) ॥५४॥
हरिररिमथ तं विधूत्य म[ध्ये तृ]णमिव वामकरेण तोलयित्वा।
गगनगतमविभ्रमं(४३)भ्रमेण व्यसुमरणौ विससर्ज तर्जयित्वा ॥५५॥
चांणूरमल्लेन यदैव कृष्णो(82b)मूर्धाधिकारी(४४)रणकारकस्य।
तदैव रामोऽपि च मुष्टिकेन मूर्धाधिकारी रणकारकस्य(XIII) ॥५६॥
मुष्टिकं बत निबद्धमुष्टिकं सम्मितं च शतकोटिसम्मितम्।
मस्तकेन निदधन् स्वमस्तकेऽभ्यञ्जनञ्च सहसा बभञ्ज न (४५) ॥५७॥
वीक्ष्य तोषलमथेशतो शलं विष्णुनादहतसज्जनादरम्(४६)।
द्राक् प्रलापनपराः पलायनं मल्लका विदधिरे न वाऽल्पकाः ॥५८॥
गोपकुमारैर्निर्जितमारैः स्वैः कृतमर्षैर्भावितहर्षैः।
व्यस्तविसर्गः साधुनिसर्गः श्रीयदुनाथः सद्विधिनाऽथ(४७)(XIV) ॥५९॥

---

४१। अलक्षणे अमङ्गलनिदाने सदसि वरमल्लस्य चाणूरस्य शक्त्यपचयो जातः।

४२। वने किरातादयो यथा हरेर्द्विपं सिंहवैरिणं हस्तिनं घ्नन्ति।

४३। पुष्पिताग्राच्छन्दः। अविभ्रमं भ्रान्तिरहितं यथा स्यात्तथा तत्परतया भ्रमेण भ्रामणेन व्यसुं विगतजीवितम्। अरणौ निर्मथ्यदारुणि।

४४। मूर्धाधिकारी क्षत्रियत्वेनोत्कृष्टतयाऽभिषिक्तः। रणकारकस्य युद्धे व्यापारयितुर्विधेः 'जय गोविन्द चाणूर'मित्यादि विष्णुपुराणीयपद्यादन्तर्धानगतैर्देवैस्तथा प्रवर्त्यमानस्य। कृष्णो यदा चाणूरेण युयुधे तदैव रणकारकस्य तस्य भगवतः श्रीकृष्णस्य अग्रजतया पूज्यतया मूर्धाधिकारी शिरोधार्यो राम इति योज्यम्। द्वयोः समकालत्वे एव पुराणाख्याने तात्पर्यं तथाऽत्रापि।

४५। सम्मितं शोभनं यथा स्यात्तथा मानयुक्तमिति वा। शतकोटिर्वज्रः। न न बभञ्ज अपि तु बभञ्जैव। तेन सम्मितं सदृशम्। अभ्यञ्जनमभ्यक्ततया।

४६। शलमपरं मल्लं विष्णुनादहतसज्जनादरं श्रीकृष्णस्य हुङ्कारध्वनिना नाशितः कंसपक्षीयाणां सज्जनानामादरो यस्य तम्। अल्पकाः क्षुद्रतरा मल्लका न वा पलायनं विदधिरे अपि तु विदधिरे एव।

४७। रुक्मवती च्छन्दः। मर्षो विमर्षो विचारस्तितिक्षा वा। साधुनिसर्गः

अथेह कंसः कुपितो भृशं स स्वभृत्यवर्गानिदमाशशंस ।
बालौ समाजात् परतः क्रियेतां यथा मदग्रे न पुनर्भवेताम्(XV) ॥६०॥
अवृद्धार्हदण्डेन शौरिः स दम्यः स्फुरन्मन्त्रकृपाणेन नन्दस्तु हन्यः ।
धनं गोकुलानीत्यमीषां ह्रियन्तां बलाद्बल्लवा राज्यतोऽपाक्रियन्ताम्(४८) ॥६१॥
इति तस्य गिरश्चरन्ति यावद् गगने कोपभरोदयेन तावत् ।
हरिरुद्धृतवान् कचेन कंसं विनिगृह्यास्य निराकरोद् वतंसम् (४९) ॥६२॥
अथ जगद्गुरुर्विकलयन्नयत् रिपुशिरः क्षितौ सममपातयत् ।
विविधधर्षितं भुवि चकर्त तं परिखयाऽऽवृतं ह्यारिमधाद्धतम्(५०) (XVI) ॥६३॥
तं वीक्ष्य कृष्णेन निपात्यमानं भ्राताऽनुजन्तस्य ययौ बलेन ।
हा हेति रावं विरुवन् स्वनेन स लीलयाऽघानि तदा बलेन ॥६४॥
कंसस्य च भ्रातरि पातिते ता-मालम्ब्य हेलां हलिना जनानाम् ।
हा हेति शब्दो जगदानशेऽलं तदद्भुतोत्कर्षविलोकनानाम्(XVII) ॥६५॥
अथ सहबलकृष्णः पित्रुपासासतृष्णः पितृपदकमलानि श्रीयुतानि प्रमाणी (५१) ।
प्रियवचनशतैस्तौ नन्दया[मा]स ततौ पितरिति जननीति प्रीतिमद्याप्नुहीति ॥६६॥

---

प्रशस्यस्वभावः । श्रीयदुनाथः कृष्णो गोपकुमारैः कर्तृभिः सद्विधिना शिष्टाचारसम्मतेनानुष्ठानेन स्वैः कृतमर्धैः स्वकीयप्रीत्या कृतविमर्षणैस्तितिक्षापरायणर्वा तैः कर्तृभिः व्यस्तविसर्गो विगतद्वेषः कृतः ।

४८ । अवृद्धार्हदण्डेन वयोवृद्ध इति करुणया वर्जितेन शासनेन । अमीषां धनं धनरूपाणि गोकुलानि गोसमूहा ह्रियन्ताम् । उद्देश्यविधेययोभिन्नवचनत्वम् । बल्लवा गोपा राज्यतो मथुरामण्डलाद्बलाद्बलप्रदर्शनेन अपाक्रियन्तां निःसार्यन्तामिति कंसस्यादेशः । भुजङ्गप्रयातं छन्दः ।

४९ । वतंसं शिरोभूषणं मुकुटं निराकरोद्दूरीकृतवान् भूमौ पातितवान् । मालभारिणीच्छन्दः ।

५० । विकलयन् वलत्किरीटमिति परिशिष्टदर्शिते पुराणे निर्दिष्टमपचारं सूचयन् । नयद्रिपुशिरोऽपातयदित्यन्वयः । किरीटेन सममेव पातप्रवणम् । परिखया वृत्येव आच्छादितं हतमरिमधात् । विकलयन्नुवन्'''परिखया विभज्यद्विमधाच्छतम्—मा. पा. । परिखया रितं ह्यावमधादिति ने. मा. पाठः । श्लोकेऽप्रमत्ता छन्दः । 'नरौ नरौ' इति तस्य लक्षणम् । यतिश्च वज्रकोणगुहाननैः षड्भिः षड्भिरिति यावदिति मन्दारमरन्दे वृत्तबिन्दौ ।

५१ । प्रमाणं शास्त्रमर्यादाज्ञानं यस्यास्तीति शिष्टाचारपरायणः । एतावन्तं कालं तनयविच्छेदादार्तौ ।

शौरिस्तमाह स्म कथं तवाहं पिता कृताशेषजगन्नयस्य ।
पुत्रं भवन्तं बत निरसन्तं वक्ष्यामि मायेयमिहाश्रयस्य ॥६७॥
अज्ञानतो मे बत चित्तमाकुलं कंसाद्भिया [सूनु]रनायि गोकुलम् ।
भवानिदानीमतिदिव्यकर्मभि-र्निरूपितो ब्रह्मतया सुशर्मभिः(५२)(XVIII) ॥६८॥
स्निग्धान्तरां वाचमिमामुवाच देवक्युदारां परमार्थसाराम् ।
ब्रह्मादि विश्वं प्रबिभर्षि स त्वं कथं सुतत्वं तव मे प्रसूत्वम् ॥६९॥
इति तावुपजाततत्त्वबोधौ भगवत्सम्भवकर्मवीक्षणेन ।
प्रतिसीरिकया(५३)सममाययौ वृणुतस्तावुभयौ क्षणं क्षणेन ॥७०॥
अवददुवत तात हेऽम्ब यद्वा-मिह नावां तदकुर्व पादसेवाम् ।
नृपकंसभयेन खिद्यमानौ क्षमणीयं करणीयकर्महानौ(XIX) ॥७१॥
पितृपदसरसीरुहालिसेवामिह बत यानि विना दिनानि यान्ति ।
तदलमफलमायुषो हि खण्डं न खलु सतां मनसोऽस्ति तत्र शान्तिः ॥७२॥
तत् प्रयाम निजमेव मन्दिरं नित्यमुल्लसित[हृष्य]दिन्दिरम्(५४) ।
तत्र युष्मदमलाङ्घ्रिसेवनात् स्वायुषः सफलयावहेऽवनात् ॥७३॥
इत्युदीर्य पितृवेश्मनि यातः सर्व एव यदवेक्षणजाऽतः ।
हेमरत्न-(84a)मणि-सद्वसनाद्यैऽद्रागुपास्तिरतुलाऽखिलवाद्यैः(५५) ॥७४॥
तेऽर्हतो भगवतो न किं भवेद् दीपकैरुप[हृतैः] कृतैरिव ।
भक्तिसम्भवविभावितान्तरान् प्रत्यपूजयदलं पतिर्दिवः ॥७५॥

---

५२ । सुशर्मभिः शोभनमङ्गलनिर्देशिभिर्भवान् ब्रह्मतया निरूपितः सिद्धान्तितः । 'कृष्णस्तु भगवान् स्वय'मिति पुराणवचनम् ।

५३ । प्रतिसीरिकया मायया यवनिकया । शौरिस्तौ पितरौ सममाययौ ताभ्यां सह मिलितः । पित्रुपासासतृष्ण इयन्तं काल पित्रोर्वसुदेवदेवक्योः सेवाया-मनवसरादधुनाऽवसरप्राप्तौ तत्र साग्रहः ।

५४ । उल्लसितहृष्यदिन्दिरं भगवद्युक्तया लक्ष्म्या सात्त्विकभावोदयेन श्लाघ्यम् अथ च श्रीयुक्तं विलासध्योदिगुणयुतमिति भावः । अवनात् तद्रूपाद्रक्षणात् ।

५५ । यद्दर्शनेन जनिता मणिकाञ्चनवसनभूषणादिभिराराधना सर्वत्रैव स्वस्वरीत्या प्रवर्तिता वाद्यादिभिश्चाराधनाऽतुला सर्वतः प्रशस्ततरा । अनन्तरश्लोके गगनपथे सङ्गतानां देवानां विशेषतस्तत्पतेरिन्द्रस्यार्चनं प्रस्तुतं यथा विष्णुपुराणे ।

अथोग्रसेनो भगवन्तमार्यमशोक आयात् परमः सभार्यः।
कंसस्य सत्कारविधौ तदाज्ञां ग्रहीतुकामः सदसीह राज्ञाम् ॥७६॥
सदाऽनुतापैकपरायणस्ततः सभाजयन् नेत्रविलोलमच्युतः।
प्रियाभिधानैर्विविधैः सुधोपमै-स्तमेवमाशिश्वसदव्यसत्क्रमैः(५६) ॥७७॥
इह जन्मनि मे न मातुलः किल कंसः प्रियवर्णनेऽतुलः।
न भवेद्यदि सोऽतिदुर्मतिः किमु जन्तुः प्रपतेदसंप्रति (५७) ॥७८॥
मयि स्थिते संप्रति भागिनेये सर्वात्मना तस्य सदा विनेये।
किमिन्द्रचन्द्रादिभिरेव देवैः क्रियेत बाढं कृतधातृसेवैः ॥७९॥
अहो बतामुष्य सदैव कान्ताः शोचामि कान्ता विमलालकान्ताः।
[बता अ]मुष्मिन्नतिदुर्विनीते कथं भविष्यन्ति चिराय नीते(५८) ॥८०॥
(84b)अयन्तवार्यस्तनयस्य कार्यं करोतु दैवं खलु दुर्निवार्यम्।
अतः परं यावदहं धरिष्ये तावत् प्रियं साहसमाहरिष्ये(XX) ॥८१॥
इत्युग्रसेनो भगवन्निसृष्टं कंसस्य चक्रेऽन्यविधं विशिष्टम्(५९)।
निजापराधेन च तं विनष्टं मत्वा पशुग्राह्यमवाप दिष्टम् ॥८२॥
इत्येवं निजविक्रमेण च मिथो भेदेन[च] क्वापि यो
भूमेर्भारभरं जहार परमानन्दस्वरूपो हरिः।
तन्मूर्तिं परिभावयन्नविरतं लीलाश्च तस्यालपन्
मुक्तिं क्षिप्रमवाप्नुयात् (६०)स भगवान् संसारसिन्धौ तरिः ॥८३॥
इति **हरिचरिता**ख्ये नव्यसत्काव्यमुख्ये
प्रसरदमृतधारे वर्णितेशावतारे।
कृतकलुषनिरासे तुष्टबालाविलासे
**त्र्यधिकदश**विसर्गः प्राप्त एषोऽत्र **सर्गः** ॥

---o---

५६। सुधोपमैरमृतवर्षिभिरव्यसत्क्रमैः शोभनपौर्वापर्यैः। प्रियाभिधानैर्हितप्रियकथनैः।
५७। असम्प्रति असाम्प्रतमयोग्यत्वेनायत्वेऽविधेयम्।
५८। चिराय नीते इहलोकादपसारिते। भविष्यन्ति जीविष्यन्ति।
५९। विशिष्टं विशेषतो विधातव्यमौर्ध्वदेहिकं कृत्यम्। पशुग्राह्यमस्वतन्त्रैर्जन्तुभिरिव स्वीकार्यं दिष्टं पुत्रवियोगरूपं भाग्यमवाप स्वीकृतवान्।
६०। जन इति कर्ता ऊह्यः। भगवद्भक्तिपरायणस्य लीलाप्रस्तावकस्य कवेरात्मनिवेदनमपीदम्।

# कवेर्वंशादिप्रशस्तिः

ग्रामोत्तमोऽस्त्यमलमञ्जुगुणैककुञ्जः
श्रीमान् करञ्ज इति वन्द्यतमो वरेन्द्र्याम् ।
यत्र श्रुतिस्मृतिपुराणपदप्रवीणाः(१)
सच्छास्त्रकाव्यनिपुणाः स्म वसन्ति विप्राः ॥१॥

कीर्णः प्रजापतिगुणैः परिपूर्ण-(85a)कामः
श्रीस्वर्णरेख इति विप्रवरोऽतीर्णः ।
तं ग्राममग्रगणनीयगुणं समग्रं
जग्राह शासनवरं(२) नृपधर्मपालात् ॥२॥

तदन्वयक्षीरसमुद्रचन्द्रो बभूव भून्दुरिति भूसुरेन्द्रः ।
आर्यैर्य आचार्यवरोऽभिषिक्तः [मूर्त्तः]बुराणां गुरुरेव वित्तः ॥३॥
त्रयीपरः काश्यपगोत्रभास्करस्तत्पुत्र आचार्यवरो दिवाकरः ।
उद्योतितद्यौरनवद्यविद्यया यत्पद्यमद्यापि बुधैरनूद्यते(३) ॥४॥
गलत्विदानीं चिरकालसञ्चितो मनीषिणामप्रतिमल्लतामदः ।
तपःस्थिता सेयमपूर्वरूपिणी दिवाकराकारधरा सरस्वती(४) ॥५॥

---

१। पदं लक्षणया पदशास्त्रं व्याकरणम् ।

२। शासनं राजदत्तभूमिः। शासनं राजदत्तोर्व्यामिति मेदिनी ।

३। 'गलत्विदानी'मित्याद्युद्धृतं दिवाकररचितं पद्यमिदानीन्तनैरपि स्मर्यत इति कविकृतो निर्देशः। उद्योदितद्यौः स्वर्गमपि दीपयन् तदीयायुःशेषेऽपि कीर्त्तिमच्छरीरः इति यावत् ।

४। तपःस्थिता 'चिन्तामणिमन्त्रचिन्तनफले' इत्यादिनैषधचरितवृत्त इव मन्त्र-जपादिना दिवाकरेण कृच्छ्रेणायत्तीकृता सरस्वती कविवाङ्निर्मिति. अथच सूर्यरश्मिः श्लेषेण'दिवाकर'पदसन्निधेन तपसि तापे स्थिता स्वकीयकिरणजालनिबद्धा ।

**नित्यानन्दः** कवीन्द्रोऽभवदतिविभवः कंसविध्वंसिनोऽंश-

स्तद्वंशस्यावतंसो भृशमकृशयशो भारते यो बभार ।

यो **रामानन्दम्** उच्चैर्विमलगुणगणालङ्कृतं नव्यकाव्यं

**कृष्णानन्दञ्च** विष्णुप्रणिहितपरमोदारभक्तिश्चकार(५) ॥६॥

नानामुनीनां वचनानि सम्यग् विचार्य तत्त्वार्थमथावगम्य(85b) ।

सदा सदाचारपरायणो यश्चक्रे प्रमोदात् **स्मृतिकौमुदीञ्च** ॥७॥

काश्यामुपास्य भगवद्भवपादपद्म-

मत्यादरेण सुचिरेण गृहानुपेत्य ।

जज्ञे(६) सुतं स निजवंशवतंसमंश-

मीशस्य विश्वविदितं **शिवदास**संज्ञम् ॥

प्रीत्या प्रासूत **सर्वाणी** सर्वपुण्यपरायणा ।

यं जिष्णुमसहिष्णूनां(७)श्रीकृष्णमिव देवकी ॥८॥

प्राप्तः पाठकराजपदवीं(८)देवीं गिरामीश्वरी-

माराध्य त्रिपुरां पुरा जपपरो मन्त्रे वरे त्रैपुरे ।

यः शास्त्राण्यधिगम्य गम्यगमनप्रज्ञो(९) गुरूणां मुखा-

दाचार्यत्वमवाप्तवानतितरामाप्तः सतां पूजितः ॥१०॥

---

५। 'रामानन्द'-'कृष्णानन्द'नाम्ना रचितयोरधुना लुप्तयोर्भगवदवतारलीलाचरितयोः काव्ययोः प्रणेता स्मार्तप्रकाण्डश्चायं नित्यानन्दो 'स्मृतिकौमुदी'नामकनिबन्धस्य रचयिताऽपि। अत्रालोचनमुपोद्घाते कृतं द्रष्टव्यम् ।

६। जज्ञे जनयामास ।

७। असहिष्णूनां जिष्णुं वादे तत्प्रतिपक्षाणां जेतारम् ।

८। पाठकराजपदवीं पण्डितसमाजात् स्वाश्रयभूतादधिकारिणः पुरुषाद्वा प्राप्तः ।
य इत्यस्य विशेषणम् ।

९। गम्यगमनप्रज्ञो गम्या बोधसमर्था गमनी अध्यापनकलया बोधनतत्परा च प्रज्ञा शास्त्रोज्ज्वला त्रिकालगोचरा मतिर्यस्य। आप्त आप्तवाङ् मुनिरिवाभ्रान्तः ।

योगात् सर्वकलासु नारदसमो व्यासोपमो भारते
न्याये गौतमसम्मितः कणभुजो न्यूनो न वैशेषिके ।
सांख्यः खण्डनखण्डमण्डित-(१०)मुखो वेदान्तसिद्धान्तवित्
स्मृत्याचारपरायणोऽतिकरुणो नारायणो मूर्तिमान् ॥११॥
सद्वृत्तसलामुत्तमवात्स्यगोत्रजां **गौरीं** स गौरीमिव पार्वतीं शिवः ।
उपायत भ्रातृमतीमुपायतस्तया गृहस्थाश्रमधर्ममास्थित ॥१२॥
स्वाध्यायमात्रार्थकमेव कुर्वन् शिष्योपशिष्यैः ककुभोऽप्यपूरि ।
प्राज्ञो महा[मानधनः]नुदारः स्वदारतुष्टोऽजन[य]त्तनूजान् ॥१३॥
सश्रीक**नारायणमिश्र** आद्यो मन्त्री महान् **माधवपाठको**ऽथ ।
प्राज्यप्रभावोऽनु च **भानुशर्मा** श्रीमान् कनीयांस्तु **चतुर्भुजो**ऽभूत् ॥१४॥
यस्य जातस्य जिह्वायां यत्नेन मधुना समम् ।
विलिख्य त्रैपुरं मन्त्रं(११)पित्रेदं पद्यमैक्ष्यत ॥१५॥
व्याकारेऽप्रतिमः(१२)स्मृतावनुपमः साहित्यविद्वत्तमः
षट्तर्कागमसत्तमः(१३) कविसभासम्भावनावि[त्तमः] ।
(86b) श्रीकृष्णार्पितचेत[नः] सुरवचोवैचित्र्यसद्माननः
श्रीमानेष **चतुर्भुजो** विजयतां वा[दीभ]पञ्चाननः(१४) ॥१६॥

---

१०। साख्यः सांख्यदर्शननिष्णातः। खण्डनखण्डमण्डितमुखः श्रीहर्षरचितखण्डनखण्डखाद्यनामापूर्वविचारप्रकरणग्रन्थाध्यापने व्यापृतः। योगात् अलौकिकशक्तिसञ्चारितादभिनिवेशात्। कणभुजो न्यूनो न अपि तु कणादप्रतिमः।

११। त्रैपुरं मन्त्रं त्रिपुरासुन्दरीदेव्याः मन्त्रं बीजमन्त्रम् ऐं क्लीं ह्रीं रूपम् अथवा तन्त्रान्तरसम्मतं श्रीं इति मन्त्रम्।

१२। व्याकारे व्याकरणशास्त्रे। एवमष्टादशश्लोकेऽपि। यथा सङ्गीतदामोदरे (१२३ पृः) 'व्याकारस्मृतिकाव्यकोषे'त्यादिः प्रयोगः।

१३। षट्तर्कागमसत्तमः षट्सु तर्केषु सत्तमः षड्दर्शनचक्रवर्ती तथाऽऽगमे तन्त्रशास्त्रे च प्रवीणः।

१४। तदानीं वङ्गेषु वादीभपञ्चानन इत्युपाधिभूयसां तार्किकाणामासीदिति ज्ञायते विबुधसंवादात्।

भागीरथीपरिसरे परमाभिरामश्री**रामकेलि**नगरे बहुशिष्टजुष्टे ।
सौवर्गवर्गवसताविह(१५)जन्मभूमौ श्रीमानसौ पितृकृते वसति स्म धीमान् ॥
व्याकारसारमधिगम्य स सम्यगादौ ज्येष्ठात् प्रतिष्ठिततमात् सुविशुद्धबुद्धिः ।
शा[स्त्रान्तरं पितु र]धीत्य विचिन्त्य काव्यं धीरोऽकरोदमुमुदारतरं प्रबन्धम् ॥१८॥

शरविधुमनुभिः (१४१५) शकस्य वर्षे
परिगणितेऽथ नभस्यशुक्लपक्षे(१६) ।
प्रतिपदि शशिवासरे सुपूर्णं
**हरिचरिता**ह्वयनव्यकाव्यमेतत् ॥१९॥

(07a)यावद्वेदो विलसतितरामृग्यजुःसामभेदो
रम्यं रामायण[विवर]णं सत्प्रमाणं पुराणम् ।
व्यासाचार्यादनुपमसुधासारदं भारतं वा
तावन्मे सत्कविकुलमुदे कल्प्यतां काव्यमेतत् ॥२०॥

———

१५ । सौवर्गवर्गा देवनिकायाः । स्वर्गशब्दादणि 'सौवर्ग'पदम् । 'जननी जन्मभूमिश्च स्वर्गादपि गरीयसी'त्याभाणकः ।

१६ । नभस्यो भाद्रसंज्ञो मासस्तस्य शुक्लपक्षीयप्रतिपदि तिथौ ।

# Appendix A

## Glossary of Words

| | | | |
|---|---|---|---|
| अ | viii. 74 | अर्दत् | vi. 47 |
| अद्दा | ii. 32, viii. 74 | अर्भता | iii. 28 |
| अङ्गज | xi. 46 | अल | viii. 97 |
| अङ्गधारय | xiii. 1 | अवान | viii. 95 |
| अचला | viii. 105 | अविलम्बन | iii. 15 |
| अञ्जत् | ii. 4 | असम्प्रति | xiii. 78 |
| अत्यरितराम् | iii. 3 | असहिष्णु | कवि. प्र. 9 |
| अतिरम्म | ix. 35 ; x. 83 | असू | viii. 103 |
| अधरित | i. 45 | अस्त | viii. 61 |
| अधितन्त्र | i. 52 | अस्मितराम् | iii. 7 |
| अधिरल | i. 16 | आकृत | iii. 18 |
| मनङ्गे रम् | viii. 80 | आखण्डलध्वज | ii. 44 |
| अनुषङ्ग | x. 44 | आदित | ii. 15 |
| अन्तरङ्ग | ix. 2 | आनुत | xi. 40 |
| अपगेह | ix. 5 | आलोक | viii. 70 |
| अपघन | iii. 39 | आस | viii. 65 ; viii. 76. 93 |
| अपसर्पिन् | iv. 15 | इदमीय | iii. 50 |
| अपारवार | vii. 8 | इरम्मद | viii. 41 |
| अभिलापिन् | v. 7 | इला | vi. 1 |
| अभिलाषिन् | ix. 29 | ईषितत्व | vi. 24 |
| अभिश्च्युत | v. 24 | ईषुः | viii. 10 |
| अभ्यास | viii. 65 | उ | viii. 60 |
| अमृतान्धम् | vii. 76 | उदंशुक | v. 24 |
| अय | xi. 43 | उदात्तवान् | xii. 37 |
| अया | viii. 65, viii. 69 | उद्भिज | iii. 64 |
| अरम् | vii. 14 ; x. 118 | उपशम | iii. 59 |
| अर्कांशुम | xii. 86 | उपसंहर | vi. 55 |

## Appendix B

# Parallelisms from the Purāṇa Texts

### I

(i. a) 10, 17.=*Viṣ. pur*. V. 1. 12-13

एतस्मिन्नेव काले तु भुरिमारावपीडिता ।
जगाम धरणी मेरौ समाजं त्रिदिवौकसाम् ॥
सब्रह्मकान् सुरान् सर्वान् प्रणिपत्याथ मेदिनी ।
कथयामास तत् सर्वं खेदात् करुणभाषिणी ।

(i. b) 19, 20 *Viṣ. pur*. V. 1. 21

"अमी दैत्याः कालनेमिपुरोगमाः ।
मर्त्यलोकं समाक्रम्य राधन्तेऽहर्निशं प्रजाः ॥

(ii) v. 25=*Hariv*. I. 53. 15-32

समुद्रेऽहं पुरा पूर्वे वेलामासाद्य पश्चिमाम् ।
आसे सार्धं तनूजेन कश्यपेन महात्मना ॥
उद्भूतैश्च महावातैः प्रवृद्धैश्च वलाहकैः ।
पर्वणा चेन्दुयुक्तेन त्रिभिः क्षुब्धोऽस्मि कारणैः ॥

(iii) v. 26=*Hariv*. I. 53. 20, 23

स (समुद्रः) मां परिभवन्नेव स्वां वेलां समतिक्रमन् ।
क्लेदयामास चपलैर्लवणैरम्बुविस्रवैः ॥
भूयश्चैव मया शप्तः समुद्रः सह गङ्गया ।

(iv) v. 27, 28=*Hariv*. I. 53. 24-26

यथा त्वं राजतुल्येन वपुषा समुपस्थितः ।......
भविष्यसि नृणां भर्ता भारतानां कुलोद्वह ॥
...सुतनुर्यशसा लोके शान्तनुस्त्वं भविष्यसि ॥

(v) v. 30=*Hariv*. I. 53. 53-54

तत्र वंश्य विभज्यन्तां विपक्षः पक्ष एव च ।
पुत्राणां हि तवो राज्ञोर्भविता विग्रहो महान् ॥
तेषां विमर्दे दायाद्ये नृपाणां भविता क्षयः ॥

(vi) v. 33=*Hariv* I. 84.56

तस्मिन् मधुवनस्थाने मथुरा नाम सा पुरी ।
शत्रुघ्नेन पुरा सृष्टा हत्वा तं दानवं रणे ॥

(vii) v. 34=*Hariv* I. 54. 63-64

तस्यां पुर्यां महावीर्यो राजा भोजकुलोद्वहः ।
तस्य पुत्रत्वमापन्नो सोऽसौ विष्णो त्वया हतः ॥
कालनेमिर्महादैत्य······
कंसो नाम विशालाक्षो भोजवंशविवर्धनः ॥

(viii) v. 36=*Hariv*. I. 55. 3, 6, 7, 12

विदिता देहिनो जाता मयैते भुवि दानवाः ।
सा च मे विदिता विप्र पूतना दुहिता बलेः ॥
कालियं चापि जानामि......
...तान् सर्वान् वधिष्यामि महासुरान् ।

(ix) v. 37=*Hariv*. I. 55. 16, 10

निवासं ननु मे ब्रह्मन् विदधातु पितामहः ।

(x) v. 40=*Hariv*. I. 55. 32

इत्यम्बुपतिना प्रोक्तो वरुणेनाहमच्युत ।
गवां कारणतत्त्वज्ञः कश्यपे शापमुत्सृजम् ॥

(xi) v. 41=*Hariv*. I. 55. 33

येनांशेन हृता गावः कश्यपेन महात्मना ।
स तेनांशेन जगति गत्वा गोपत्वमेष्यति ।

(xii) v. 49=*Hariv*. I. 55. 50-51

तत्र वै पार्वती नाम गुहा मेरोः सुदुर्गमा ।...
...पुराणं तत्र विन्यस्य देहं हरिः...
आत्मानं योजयामास वसुदेवगृहे प्रभुः ॥

(xiii) v. 54=*Hariv*. II. 1. 15-16

तत्र मन्त्रयतामेव देवतानां मया श्रुतः ।
भवतः सानुगस्यैव वधोपायः सुदारुणः ॥
तत्रैषा देवकी या तु मथुरायां लघुष्वसा ।
योऽस्याः गर्भोऽष्टमः वंश्यो स ते मृत्युर्भविष्यति ॥

(xiv) v. 56=*Hariv.* II. 1. 26-28

…केशी प्रलम्बो धेनुकस्तथा।

अरिष्टो वृषभश्चैव पूतना कालियस्तथा॥

(xv) v. 60, 63, 64=*Hariv.* II. 2. 27-28

ताञ्चोवाच ततो निद्रां विष्णुः सत्यपराक्रमः।

गच्छ निद्रे मयोत्सृष्टा देवकीभवनान्तिकम्॥

इमान् प्राणेश्वरान् गृह्य षड्गर्भान् दानवोत्तमान्।

षड्गर्भान् देवकीगर्भे योजयस्व यथाक्रमम्॥

(XVI) v. 68, 69=*Hariv.* II. 2. 49. *Bhāg. pur.* X. 4-13. & *Viṣṇupur.* V. 1.81. (vide) *ṭippaṇi* 58 on text. p. 14

II

(I) v. 4,5=*Bhāg. pur.* X. 3.5-8

जायमानेऽजने तस्मिन् नेदुर्दुन्दुभयो दिवि।

मन्दं मन्दं जलधरा जगर्जुरनुसागरम्।

देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाशयः।

आविरासीद्यथा प्राच्यां दिशीन्दुरिव पुष्कलः॥ ( टिप्पणी द्रः )

(II) v. 6=*Bhāg. pur.* X. 3. 9-10

तमद्भुतं बालकमम्बुजेक्षणं………पीताम्बरं सान्द्रपयोदसौभगम्।

………विरोचमानं वसुदेव ऐक्षत॥

(III) v. 14-15= *Bhāg. pur.* X. 3. 12-13.

अथैनमन्ते दैवधर्मे पूरुषं परं नताङ्गः कृतधीः कृताञ्जलिः।

विदितोऽसि भवान् साक्षात् पुरुषः प्रकृतः परः।

केवलानुभवानन्दस्वरूपः सर्वबुद्धिदृक्॥……

(IV) v. 17=*Bhāg. pur.* X. 3. 30.

उपसंहर विश्वात्मन्नदो रूपमलौकिकम्।

शङ्खचक्रगदापद्मश्रिया जुष्टं चतुर्भुजम्॥

(V) v. 21=*Bhāg. pur.* X. 3. 31.

विश्वं यदेतत् स्वतनौ………।

बिभर्ति सोऽयं मम गर्भगोऽभदहो नृलोकस्य विडम्बनं हि तत्॥

(VI) v. 25-28 = *Bhāg. pur.* X. 3. 32-38.

त्वमेव पूर्वसर्गेऽभूः पृश्निः स्वायम्भुवे सति ।
तदाऽयं सुतपा नाम प्रजापतिरकल्मषः ॥
एवं वां तप्यतोस्तीव्रं तपः परमदुष्करम् ।......
प्रादुरासं वरदराड्युवयोः कामदित्सया ।
व्रियतां वर इत्युक्ते माद्दशो वां वृतः सुतः ॥

(VII) v. 32. = *Bhāg. pur.* X. 3. 48-49.

तया ( योगमायया ) हृतप्रत्ययसर्ववृत्तेषु द्वाःस्थेषु पौरेष्वपि शायितेष्वथ ।
द्वारस्तु सर्वाः पिहिता दुरत्यया बृहत्कपाटायसकीलशृङ्खलैः ॥
ताः कृष्णवाहे वसुदेव आगते स्वयं व्यवर्यन्त यथा तमो रवेः ॥

(VIII) v. 34. = *Bhāg. pur.* X. 3. 50.

भयानकावर्तशताकुला नदी मार्गं ददौ सिन्धुरिव श्रियः पतेः ।

(IX) v. 35 = *Viṣṇupur.* v. 3. 19.

कंसस्य करदानाय तत्रैवाभ्यागतांस्तटे ।
नन्दादीन् गोपवृद्धांश्च यमुनायाः ददर्श सः ॥

(X) v. 43.49 = *Viṣṇupur.* v. 3. 25-27.

कंसस्तूर्णमागतैनां ततो जग्राह बालिकाम् ।
मुञ्च मुञ्चेति देवक्या सन्नकण्ठ्यो निवारितः ॥

(XI) v. 54 = *Bhāg. pur.* x. 4. 15, 18

अहो भगिन्यहो भाम मया वां बत पाप्मना ।
पुरुषाद इवापत्यं बहवो हिंसिताः सुताः ।
मा शोचतं महाभागा वात्मजान् स्वकृतम्भुजः ॥

(XII) v. 56. 57-58 = *Bhāg. pur.* x. 4. 23.

क्षमध्वं मम दौरात्म्यं.........
इत्युक्त ऽश्रुमुखः पादौ श्यालः स्वस्रोरथाग्रहीत् ॥

III

(I) v. 7. 8 = *Viṣṇupur.* v. 5. 1, 2.

प्रहृष्टं दृष्टवान्नन्दं पुत्रो जातो ममेति वै ।
वसुदेवोऽपि तं प्राह दिष्ट्या दिष्ट्येति सादरम्

(II) v. 9 = *Viṣṇupur*. v. 5. 3

दत्तो हि वार्षिकः सर्वो भवद्भि र्नृपतेः करः ।

......नात्र स्थेयं महाधनैः ॥

(III) v. 14 = *Hariv*. II. 5. 15

कुमारस्कन्धवाहायां शिविकायां समाहितः ।

संवेशयामास शिशुं शयनीयं महामतिः ॥

(IV) v. 15. 18 = *Hariv*. II. 5. 16-30ab

जगाम च विविक्तेन शीतलानिलसर्पिणा ॥...

स ददर्श शुभे देशे .........

विचित्रश्वापदै रम्यं लतावल्लीमहाद्रुमम् ।

गोभिस्तृणविलग्नाभिः स्यन्दतीभिरलङ्कृतम् ॥

(V) v. 20 = *Hariv*. II. 5. 22

गोव्रजं गोरुतं रम्यं गोपनारीभिराव तम् ॥

(VI) v. 24 = *Hariv*. II. 5. 32

सा यत्र रोहिणी देवी वसुदेवसुखावहा ।

तत्र तं बालसूर्याभं कृष्णं गूढ़ न्यवेशयत् ॥

(VII) v. 26, 27 = H*ariv*. II. 6. 4.

शकटस्य त्वधः सुप्तं कदाचित् पुत्रगर्धिनी ।

यशोदा तं समुत्सृज्य जगाम यमुनातीरम् ॥

(VIII) v. 29. = H*ariv*. II. 6. 13.

स ददर्श विपर्यस्तं भिन्नभाण्डघटीघटम् ।

अपास्तधूर्विभिन्नाक्षं शकटं चक्रमौलिनम ॥

(IX) v. 38 = *Bhāg. pur*. x. 7. 14-15

इति बालकमादाय सामर्ग्यजुरुपाकृतैः ।

जलैः पवित्रौषधिभिरभिषिच्य द्विजोत्तमैः ।

वाचयित्वा स्वस्त्ययनं नन्दगोपः समाहितः ॥

हुत्वा चाग्निं द्विजातिभ्यः प्रादादन्नं महागुणम् ॥

(X) v. 42-44 = *Viṣṇupur*. v. 5. 9-11

कृष्णस्तु तत् स्तनं गाढ़ं कराभ्यामतिपीड़ितम् ।

गृहीत्वा प्राणसहितं पपौ क्रोधसमन्वितः ।

सातिमुक्तमहारावा......पपात पूतना भूमौ म्रियमाणातिभीषणा ॥

तन्नादश्र तिसन्त्रस्ताः प्रबुद्धास्ते व्रजौकसः।
ददृशुः पूतनोत्सङ्गे कृष्णं तां च निपातिताम् ॥

(xi) v. 49=*Bhāg. pur.* X. 6. 20

गोमूत्रेण स्नापयित्वा पुनर्गोरजसाऽर्भकम्।
रक्षाश्चक्रश्च शकृता द्वादशाङ्गेषु नामभिः ॥

(xii) v. 53=*Bhāg. pur.* X. 8. 11-13

चकार नामकरणं गूढो रहसि बालयोः।

(xiii) v. 54=*Bhāg. pur.* X. 7. 18-19

एकदारोहमारूढं लालयन्ती सुतं सती।
गरिमाणं शिशोर्वोढुं न सेहे गिरिकूटवत्।
भूमौ निधाय तं गोपी विस्मिता भारपीडिता ॥

(xiv) v. 55, 57, 60=*Bhāg. pur.* **X.** 7. 20-21

दैत्यो नाम तृणावर्तः कंसभृत्यः प्रणोदितः।
चक्रवातस्वरूपेण जहारासीनमर्भकम् ॥
गोकुलं सर्वमावृण्वन् मुष्णंश्चक्षूंषि रेणुभिः।

(xv) v. 61, 65, 66=*Bhāg.* X. 7, 27, 28, 30

तमश्मानं मन्यमान आत्मनो गुरुमत्तया।
गले गृहीत उत्स्रष्टुं नाशक्नोदद्भुतार्भकम् ॥
गलग्रहणनिश्चेष्टो दैत्यो निर्गतलोचनः।
अव्यक्तरावो न्यपतत् सहबालो व्यसुर्व्रजे ॥
तं स्वस्तिमन्तं पुरुषादनीतं विहायसा मृत्युमुखात् प्रमुक्तम्।
गोप्यश्च गोपाः सह नन्दमुख्या लब्ध्वा पुनः प्रापुरतीव मोदम् ॥

IV

(i) v. 2=*Bhāg. pur.* X. 5. 1-3

नन्दस्त्वात्मज उत्पन्ने जाताह्लादो महामनाः।
आहूय विप्रान् वेदज्ञान्...
...कारयामास विधिवत् पितृदेवार्चनं तथा।
धेनूनां नियुते प्रादाद्विप्रेभ्यः समलङ्कृते।

(ii) v. 6 = *Bhāg. pur*. X. 8. 24

यर्ह्यङ्गनादर्शनीयकुमारलीलावन्तर्व्रजे तदबलाः प्रगृहीतपुच्छैः।
वत्सैरितस्तत उभावनुकृष्यमाणौ प्रेक्षन्त्य उज्झितगृहा जहृषुर्हसन्त्यः॥

(iii) v. 7 = *Bhāg. pur*. X. 8. 27

ततस्तु भगवान् कृष्णो वयस्यैर्व्रजबालकैः।
सहरामो व्रजस्त्रीणां चिक्रीडे जनयन्मुदम्॥

(iv) v. 10, 11 = *Bhāg. pur*. X. 8. 35-38

नाहं भक्षितवानम्ब सर्वे मिथ्याऽभिशंसिनः।
...पश्य मे मुखम्॥
यद्येवं तर्हि व्यादेहीत्युक्तः स भगवान् हरिः।
व्यादत्ताव्याहतैश्वर्यः क्रीडामनुजबालकः।
सर्वत्र ददृशे विश्वं जगत् स्थास्नु च खं दिशः।
साद्रिद्वीपाब्धिभूगोलं...
ज्योतिश्चक्रं जलं तेजो... ॥

(v) v. 14 = *Bhāg. pur*. X. 9. 5-6

तमङ्कमारूढमपाययत् स्तनं स्नेहस्नुतं सस्मितमीक्षती मुखम्।
अतृप्तमुत्सृज्य जवेन सा ययावुत्सिच्यमाने पयसि त्वधिश्रिते।
सञ्जातकोप......भित्त्वा मृषाऽश्रु ...जघास हैयङ्गवमन्तरं गतः॥

(vi) v. 26, 27 = *Bhāg. pur*. X. 9. 12-14

त्यक्त्वा यष्टिं सुतं भीतं विज्ञायार्भकवत्सला।
इयेष किल तं बद्धुं दाम्नाऽतद्वीर्यकोविदा।
न चान्तर्न बहिर्यस्य न पूर्वं नापि चापरम्।...
तं मत्वाऽऽत्मजमव्यक्तं मर्त्यलिङ्गमधोक्षजम्।
गोपिकोलूखले दाम्ना बबन्ध प्राकृतं यथा॥

(vii) v. 30, 31 = *Bhāg. pur*. X. 9. 15-16

तद्दाम बध्यमानस्य स्वार्भकस्य कृतागसः।
द्व्यङ्गुलोनमभूत्तेन सन्दधेऽन्यच्च गोपिका॥
यदाऽसीत्तदपि न्यूनं तेनान्यदपि सन्दधे।
तदपि द्व्यङ्गुलं न्यूनं यद्यदादत्त बन्धनम्॥

(viii) v. 36=37. 48-49=*Hariv*. II. 7. X. 16, 17, 26

सोऽङ्गनान्निःसृतः कृष्णः कर्षमाण उदूखलम् ।
यमलाभ्यां प्रवृद्धाभ्यामर्जुनाभ्यां चरन् वने ॥…
सा ददर्श तयोर्मध्ये द्रुमयोरात्मजं शिशुम् ।
दाम्ना निबद्धमुदरे कर्षमाणमुलूखलम् ॥

(ix) v. 55=*Bhāg. pur*. X. 10. 27, 43

तत्र श्रिया परमया ककुभः स्फुरन्तौ सिद्धावुपेत्य…
कृष्णं प्रणम्य शिरसाऽखिललोकनाथं बद्धाञ्जली विरजसाविदमूचतुः स्म
इत्युक्तौ तौ परिक्रम्य प्रणम्य च पुनः पुनः ।
बद्धोदूखलमामन्त्र्य जग्मतुर्दिशमुत्तराम् ॥

V

(i). v. 2=*Hariv*. II. 8-1

एवं तौ बाल्यमुत्तीर्णौ कृष्णसङ्कर्षणावुभौ ।
तस्मिन्नेव व्रजस्थाने सप्तवर्षौ बभूवतुः ॥

(ii) v. 4-6=*Hariv*. II. 8-27

नीलपीताम्बरधरौ पीतश्वेतानुलेपनौ ।
बभूवतुर्वत्सपालौ काकपक्षधरावुभौ ॥
पत्रवाद्यं श्रुतिसुखं वादयन्तौ वराननौ ।…
चञ्चूर्यन्तौ रमन्तौ स्म किशोराविव चञ्चलौ ॥

(iii) v. 14-17=*Hariv*. II. 8. 8-16

आर्य नास्मिन् वने शक्यं गोपालैः सह क्रीडितुम् ॥
प्रक्षीणतृणकाष्ठं च…
अरण्यमिदमल्पोदमल्पकक्षं निराश्रयम् ।…
उत्सन्नसर्वखतृणो घोषोऽयं नगरायते ॥

(iv) v. 19=H*ariv*. II. 8. 22-24

श्रूयते हि वनं रम्यं पर्याप्ततृणसञ्चयम् ।
नाम्ना वृन्दावनं नाम स्वादुवृक्षफलोदकम् ॥……

(v) v. 25=H*ariv*. II. 8. 29

तत्रायं कल्प्यतां घोषस्त्यज्यतां निर्गुणं वनम् ।
सन्त्रासयावो भद्रं ते किञ्चिदुत्पाद्य कारणम् ॥

(vi) v. 26.=H*ariv*. II. 8. 30-31

एवं कथयतस्तस्य वासुदेवस्य धीमतः।
प्रादुर्बभूवुः शतशो रक्तमांसवसाशयाः।
मेरोश्चिन्तयतस्तस्य स्वतनूरुहजास्तदा।
विनिष्पेतुः भयकराः सर्वशः शतशो वृकाः॥

(vii) v. 30-31=H*ariv*. II. 9. 8.

वृन्दावननिवासाय तान् ज्ञात्वा कृतनिश्चयान्।
नन्दगोपो बृहद्वाक्यं बृहस्पतिरिवाददे॥

(viii) v. 35=H*ariv*. II. 9. 9-11, 23-29.

वत्सयूथानि काल्यन्तां यज्यन्तां शकटानि च।
......

(ix) v. 45-46=H*ariv*. II. 9. 19-21.

निवेशं विपुलं चक्रे गवां चैव हिताय च।
शकटावर्तपर्यन्तं चन्द्रार्धाकारसंस्थितम्।......

(x) v. 49. 56=H*ariv*. II. 9. 30,31

रम्यं वननिवेशं वै स्वादुमूलफलोदकम्।
तास्तु कामदुघा गावः सर्वपक्षिरतं वनम्।
वृन्दावनमनुप्राप्ता नन्दनोपमकाननम्॥

(xi) v. 54=*Bhāg. pur*. x. 11. 43.

भ्रामयित्वा कपित्थाग्रे प्राहिणोद्गतजीवितम्।
स कपित्थैर्महाकायः पात्यमानैः पपात ह॥

(xii) v. 57=*Bhāg. pur*. x. 11. 44.

तं वीक्ष्य......। देवताश्च परिसन्तुष्टा बभूवुः पुष्पवर्षिणः॥

## VI

(i) v. 1-23=*Bhag. pur* x. 12. 1. 11

प्रबोधयन् शृङ्गरवेण चारुणा विनिर्गतो वत्सपुरःसरो हरिः।
इत्थं......। नरदारकेण साकं विजह्रुः कृतपुण्यपुञ्जाः॥

(ii) v. 26=*Bhāg. pur*. x. 12. 16

इति व्यवस्याजगरं बृहद्वपुः स...पथि व्यशेत ग्रसनाशया पुनः।

(iii) v. 31=*Bhāg. pur*. x. 1.2 24

अस्मान् किमत्र ग्रसिता निविष्टानयं तथा चेद्बकवद्विनङ्क्ष्यति ।

(iv) v. 33=*Bhāg. pur*. x. 12. 27-28

तान्वीक्ष्य कृष्णः सकलाभयप्रदो...

कृत्यं किमत्रास्य खलस्य जीवनं न वा अमीषाञ्च विहिंसनम् ।

द्वयं कथं स्यादिति संविचिन्त्य ज्ञात्वा विशत्तुण्डमशेषदृग् हरिः ॥

(v) v. 40=*Bhāg. pur*. x. 13. 11.

बिभ्रद्वेणुं···मसृणकवलं तत्फलान्यङ्गुलीषु ।

तिष्ठन् मध्ये स्वपरिसुहृदो...बुभुजे यज्ञभुग्बालकेलिः ॥

(vi) v. 43=*Bhāg. pur*. x. 13. 16-17

ततो वत्सानदृष्ट्वैत्य पुलिनेऽपि च वत्सपान् ।

उभावपि वने कृष्णो विचिकाय समन्ततः ।

क्वाप्यदृष्ट्वान्तर्विपिने वत्सान् पालांश्च धर्मविश्ववित् ।

सर्वं विधिकृतं कृष्णः सहसाऽवजगाम ह ॥

(vii) v. 45=*Bhāg. pur*. x. 13. 19.

यावद्वत्सवत्सकाल्पकवपु (?) र्यावत् कराङ्घ्र्यादिकं

यावच्छीलगुणाष्टविधाकृतिवयो यावद्विहारादिकं

सर्वं विष्णुमयं गिरोऽङ्गवदजः सर्वस्वरूपो बभौ ॥

(viii) v. 49=*Bhāg. pur*. x. 13. 24

गावस्ततो गोष्ठमुपेत्य सत्वरं......

स्वकान् स्वकान् वत्सतरानपाययन्मुहुर्लिहन्त्यः स्रवदौधसं पयः ॥

(ix) v. 53=*Bhāg. pur*. x. 13. 40-41

तावदेत्यात्मभूः पुरोवदन्तं क्रीडन्तं ददृशे सकलं हरिम् ॥

यावन्तो गोकुले बालाः सवत्साः सर्व एव हि ।

मामाशये शयाना मे नाद्यापि पुनरुत्थिताः ॥

(x) v. 56, 59=*Bhāg. pur*. x. 13· 46.49

तावत् सर्वे वत्सपालाः पश्यतोऽजस्य तत्क्षणात् ।

व्यदृश्यन्त घनश्यामाः पीतकौशेयवाससः ॥

चतुर्भुजाः शङ्खचक्रगदाराजीवपाणयः ।

किरीटिनः कुण्डलिनो हारिणो वनमालिनः ॥

(xi) v. 61 = *Bhāg. pur*. x. 13. 55

एवं सकृद्ददर्शाजः परब्रह्मात्मनाऽखिलम् ।
यस्य भासा सर्वमिदं विभाति सः ॥

(xii) v. 64 = *Bhāg. pur*. x. 13. 63

उत्थायोत्थाय कृष्णस्य चिरस्य पादयोः पतन् ।
आस्ते महित्वं प्राग्दृष्टं स्मृत्वा स्मृत्वा पुनः पुनः ॥

## VII

(i) v. 1-6 = Hariv. II 10. 3-20

पतता मेघवातेन नवतोया सुकर्षिणा ।
भूमिचर्याविनस्येव लक्ष्यते सम्मार्जिता तथा ॥
सन्ततासारनिर्यत्नाः क्लिन्नपत्रोत्तरच्छदाः ।
न त्यजन्ति नगाग्राणि श्रान्ता इव पतत्रिणः ॥
तोयगम्भीरलम्बेषु स्रवत्सु च नदत्सु च ।
उदरेषु नवाम्बुदानां सर्जतीव दिवाकरः ॥...

(ii) v. 8-12 = *Bhāg. pur*. X. 17. 8-14

सुपर्णपक्षाभिहतः कालियोऽतीव विह्वलः ।
ह्रदं विवेश कालिन्द्यास्तदगम्यं दुरासदम् ।
तत्रैकदा जलचरं गरुडो भक्ष्यमीप्सितम् ।
निवारितः सौभरिणा प्रसह्य क्षुधितोऽहरत् ॥
......कृपया सौभरिः प्राह तत्रत्यक्षेममाचरन् ।
अत्र प्रविश्य गरुडो यदि मत्स्यान् स खादति ।
सद्यः प्राणैर्वियुज्येत सत्यमेतद् ब्रवीम्यहम् ॥
कृष्णं ह्रदाद्विनिष्क्रान्तं ...प्रमोदनिभृतात्मानो गोपाः प्रीत्याऽभिरेभिरे ॥

(iii) v. 15-16 = *Viṣ. pur*. V. 7. 8-10

तदस्य नागराजस्य कर्तव्यो निग्रहो मया ।...
एतदर्थं तु लोकेऽस्मिन्नवतारः कृतो मया ॥...

(iv) v. 17 = *Bhāg. pur*. X. 16. 10-11

तं नागभोगपरिवीतमदृष्टचेष्टमालोक्य तत्प्रियसखाः पशुपा भृशार्ताः ।...
गावो वृषा वत्सतर्यः क्रन्दमानाः सुदुःखिताः । कृष्णे न्यस्तेक्षण-भीता रुदत्य इव तस्थिरे ॥

(v) v. 26-30=*Hariv.* II. 12. 26-30

...न यास्यामो विना दामोदरं व्रजम् ॥

दिवसः को विना सूर्यं विना चन्द्रेण का निशा ।...विना कृष्णेन को व्रजः ?

...संकर्षणस्तु...बभाषे कृष्णमव्ययम् ॥ कृष्ण कृष्ण महाबाहो गोपीनां नन्दिवर्धन ।

दम्यतामेष वै क्षिप्तं सर्पराजो विषायुधः ॥

(vi) v. 32-34=*Viṣ. pur.* V. 7. 38-42

...अवतार्य भवान् पूर्वं गोकुले तु पुराङ्गनां ।

क्रीडार्थमात्मनः पश्चादवतीर्णोऽसि शाश्वत । गोपा एव हि बान्धवाः ।

गोप्यश्च सीदतः कस्मादेतान् बन्धूनुपेक्षसे ॥

(vii) v. 39-42=*Viṣ. pur.* V. 7. 47, 48, 57

तं विभुग्नशिरोग्रीवमास्येभ्यः स्रुतशोणितम् ।

विलोक्य करुणं जग्मुस्तत्पत्न्यो मधुसूदनम् ॥...

क्व पन्नगोऽल्पवीर्योऽयं क्व भवान् भुवनाश्रयः ।...

ततः कुरु जगत्स्वामिन् प्रसादमवसीदतः ।

प्राणांस्त्यजति नागोऽयं भर्तृभिक्षा प्रदीयताम् ॥

(viii) v. 44-48=*Viṣ. pur.* V. 7. 68-73

सोऽहं ते देवदेवेश नार्चनादौ स्तुतौ न च ।

सामर्थ्यवान् कृपामात्रमनोवृत्तिः प्रसीद मे ।।...

यथाऽहं भवता सृष्टो जात्या रूपेण चेश्वर ।

स्वभावेन च संयुक्तस्तथेदं चेष्टितं मया ॥

यद्यन्यथा प्रवर्तेयं देवदेव ततो मयि ।

न्याय्यो दण्डनिपातो वै तवैव वचनं यथा ।

तथाऽप्यज्ञे जगत्स्वामिन् दन्ड पातितवान् मयि ।

स श्लाघ्योऽयं परो दण्डस्त्वत्तो मा नान्यतो वरः ॥

(ix) v. 49-50=*Bhāg. pur.* X. 16. 60-67

नात्र स्थेयं त्वया सर्प समुद्रं याहि मा चिरम् ।...

द्वीपं रमणकं हित्वा ह्रदमेतमुपाश्रितः ।

यद्भयात् स सुपर्णस्त्वां नाद्यास्मत्पादलाञ्छितम् ॥

(x) v. 56=*Viṣ.* V. 7. 79

गते सर्पे परिष्वज्य मृतं पुनरिवागतम् ।

गोपा मूर्धनि हार्देन सिषिचुर्नेत्रजैर्जलैः ॥

VIII

(i-iii) v. 3-6=*Viṣ. pur*. V. 8. 4.5

हे राम हे कृष्ण सदा धेनुकेनैष रक्ष्यते।

भूप्रदेशो यतस्तस्मात् पक्वानीमानि सन्ति वै ॥

वयमेतान्यभीप्साम: पात्यन्तां यदि रोचते ॥

(iv-vi) v. 7-10=*Bhāg. pur*. X. 15-29

फलानां पततां शब्दं निशम्यासुर-रासभ:। अभ्यधावत्...

समेत्य तरसा...। निहत्योरसि काशब्दं मुञ्चन् पर्यसरत् खगः।

पुनरासाद्य संरब्धः....।

चरणावपरौ राजन् वलाय प्राक्षिपद्रुषा ॥

स तं गृहीत्वा पदयोर्भ्रामयित्वैकपाणिना।

चिक्षेप तृणराजाग्रे भ्रमेण त्यक्तजीवितम् ॥

(vii-viii) v. 18-20=*Viṣ. pur*. V. 9. 6-7

चेरतुर्लोकसिद्धाभिः क्रीड़ाभिरितरेतरम् ॥

(ix-x) v. 19-25=Hariv. II. 14. 16, 17, 18—27

स तु च्छिद्रान्तरप्रेप्सुः प्रलम्बो गोपतां गतः ॥...

अविषह्यं ततो मत्वा कृष्णमद्भुतविक्रमः ॥ रौहिणेयवधे यत्नमकरोद्दानवोत्तमः ॥

प्रक्रीड़ितास्तु ते सर्वे द्वौ द्वौ युगपदुत्पतन्।

हरिणा क्रीड़नं नाम वालक्रीड़नकं ततः। कृष्णः श्रीदामसहितः पुप्लुवे गोपसूनुना।

सङ्कर्षणस्तु प्लुतवान् प्रलम्बेन सहानघः ॥

...सङ्कर्षणं तु उत्क्षिप्य दानवः द्रुतं जगाम विमुखः।

महाननो महाग्रीवः सुमहानन्तकोपमः।

रौद्रः शकटचक्राक्षो नमयंश्चरणैर्महीम् ॥

(xi-xiii) 26-29=*Viṣṇupur*. v. 9. 20, 32, 33

कृष्ण कृष्ण ह्रियेह्येष......

भवानहञ्च विश्वात्मन्नेकमेव च कारणम्। जगतोऽस्य जगत्यर्थे भेदेनावां व्यवस्थितौ ॥

तत् स्मर्यताममेयात्मंस्त्वयाऽत्मा जहि दानवम्। मानुष्यमेवावलम्ब्य......

(xiv) v. 31, 32=*Hariv*. II. 51, 52,58

मुष्टिना वज्रकल्पेन मूर्ध्नि चैनं समाहनत्।

बलदेवेति नामास्य देवैरुक्तं दिवि स्थितैः। बलं तु बलदेवस्य तदा भुवि जना विदुः ॥

IX

(i-ii) v. 5, 6=*Viṣṇupur*. v. 10. 3. 4.

मयूरा मौनमातस्थुः परित्यक्तमदा वने। असारतां परिज्ञाय संसारस्येव योगिनः।

उत्सृज्य जलसर्वस्वं विमलाः सितमूर्तयः। तत्यजुश्चाम्बरं मेघा गृहं विज्ञानिनो यथा॥

(iii) v. 7.=*Viṣṇupur*. v. 10. 2

अवापुस्तापमत्यर्थं शफर्यः पल्वलोदके।

पुत्रक्षेत्रादिसक्तेन ममत्वेन यथा गृही॥

(iv-v) v. 8. 19=*Viṣpur*. v. 10, 6, 7

कुमुदैः शरदम्भांसि योग्यतालक्षणं ययुः। अवबोधैर्मनांसीव समत्वममलात्मनाम्।

तारकाविमले व्योम्नि रराजाखण्डमण्डलः। चन्द्रश्चरमदेहात्मा योगी साधुकुले यथा॥

(vi) v. 13. 14=*Viṣṇupur*. v. 10. 19. 20. 24

मेघानां पयसाञ्चेशो देवराजः शतक्रतुः॥......

तस्मात् प्रावृषि राजानं सर्वे शक्रं मुदा युताः।

मखैः सुरेशमर्चन्ति वयमन्ये च मानवाः॥

(vii-viii) v. 15-19=*Viṣṇupur*. v. 10. 25-31

नन्दगोपस्य वचनं श्रुत्वेत्थं···। रोषाय त्रिदशेन्द्रस्य प्राह दामोदरस्तदा।

न वयं कृषिकर्तारो वाणिज्यजीविनो न च··। गावोऽस्मद्दैवतं तात वयं वनचरा यतः।

आन्वीक्षिकी त्रयी वार्ता दण्डनीतिस्तथा परा···अस्माकं गौः परा वृत्तिर्वार्तिभेदै-
रियं त्रिभिः।।

यो यस्य फलमश्नन् वै पूजयत्यपरं नरः। इह च प्रेत्य चैवासौ न तदाप्नोति शोभनम्॥

(ix) v. 20=*Hariv*. x. 16. 6-7

श्रूयन्ते गिरयश्चापि वनेऽस्मिन् कामरूपिणः।

प्रविश्य तास्तातनवो रमन्ते स्वेषु सानुषु॥

भूत्वा केशरिणः सिंहा व्याघ्राश्च नखिनां वराः।

वनानि स्वानि रक्षन्ति त्रासयन्तो वनच्छिदः॥

(x-xi) v. 21, 22=*Bhāg. pur*. x. 24. 25-30

तस्माद् गवां ब्राह्मणानामद्रेश्चारभ्यतां मखः।

पच्यन्तां विविधाः पाकाः सूपान्ताः पायसादयः। हूयन्तामग्नयः सम्यग्ब्राह्मणैः··· ॥

अन्नं बहुविधं तेभ्यो दीयतां...गिरये दीयतां बलिः॥

प्रदक्षिणञ्च कुरुत गोविप्रानलपर्वतान्। एतन्मखं मतं तात क्रियतां यदि रोचते॥

(xii. xiii-xiv) v. 24, 25, 29 = *Hariv.* II. 17. 10. 18. 24

यत्त्वयाऽभिहितं वाक्यं गिरियज्ञं प्रति प्रभो ।

कस्तल्लङ्घयितुं शक्तो वेलामिव महोर्मयः ॥

सम्प्रावर्तत यज्ञोऽस्य गिरेर्गोभिः समाकुलः ॥

तं गोपाः...गिरिमूर्ध्नि स्थितं दृष्ट्वा कृष्णं जग्मुः प्रधानतः ॥

(xv) v. 30,31 = *Viṣṇupur.* v. 11. 1-4

मखे प्रतिहतशक्रो... । संवर्तकं नाम गणं तोयर्तकं नाम गणं तोयदानां यथाब्रवीत् ।

आजीवो यः परास्तेषां गावस्तस्य च कारणम् ।

ता गावो वृष्टिपातेन पीड्यन्तां वचनान्मम ॥

(xvi) v. 34 = *Hariv.* II. 8, 9, 20

गर्जितेन च मेघानां......

प्राप्तोन्तकालो लोकानां व्यक्तमेकार्णवा मही ।

इति गोपगणा वाक्यं व्याहरन्ति भयार्दिताः ॥

(xvii) v. 38, 39 = *Viṣṇupur.* v. 11. 10-12

गावस्तु तेन पतता वर्षवातेन वेगिना ।

धूताः प्राणान् जहुः सन्नत्रिकसक्थिशिरोधराः ॥

क्रोडेन वत्सानाक्रम्य तस्थुरन्या महामुदा ।

त्राहि त्राहीत्यस्वशब्दाः कृष्णमूचुरिवातुराः ॥

(xviii, xix) v. 40-43 = *Viṣṇupur.* v. 11. 13, 15, 18

ततस्तत् गोकुलं सर्वं... । अतीवार्तं हरिर्दृष्ट्वा... ।

इममद्रिमहं धैर्यादुत्पाट्योरुशिलाघनम् ।

धारयिष्यामि गोष्ठस्य पृथुच्छत्रमिवोपरि ॥

गोसाकंशाह हसञ्छौरिः समुत्पाटितभूधरः ।

विशध्वमत्र त्वरिताः कृतं वर्षनिवारण ॥

(xx-xxi) v. 47-49 = *Viṣṇupur.* v. 11. 23

ततो धृते महाशैले परित्राते च गोकुले ।

मिथ्याप्रतिज्ञो बलभिद्वारयामास तान् घनान् ॥

(xxii) v. 51 = *Viṣṇupur.* v. 12, 3, 4

चारयन्तं महावीर्यं गास्तु गोपवपुर्धरम् ।

...गोपं कृतं गोपकुमारकैः। गरुडं च ददर्शोच्चैरन्तर्धानगतं... ॥

कृतच्छायं हरेर्मूर्ध्नि पक्षाभ्यां पक्षि पुङ्गवम् ॥

(xxiii-xxiv) v. 51-54=*Hariv*. II. 19, 44, 45

अहं किलेन्द्रो देवानां त्वं गवामिन्द्रतां गतः ।
गोविन्द इति लोकास्त्वां स्तोष्यन्ति भुवि शाश्वतम् ॥

(xxv) v. 58=*Hariv*. II. 19. 77-81

ममोपरि महेन्द्रस्त्वं स्थापितो गोभिरीश्वरः ।
उपेन्द्र इति कृष्ण त्वां गास्यन्ति दिवि देवताः ॥

## X

(i) v. 1-3=*Viṣ. pur*. V. 13. 14-15

कृष्णस्तु विमलं व्योम शरच्चन्द्रस्य चन्द्रिकाम् ।
तदा कुमुदिनीं फुल्लामामोदितदिगन्तराम् ।
वनराजिं तथा कूजद्भृङ्गमालामनोहराम् ।
विलोक्य सह गोपीभिर्मनश्चक्रे रतिं प्रति ॥

(ii) v. 4-6=*Viṣ. pur*. V. 13. 17-22

…शनैः शनैर्जगौ गोपी काचित्तस्य लयानुगम् ।
दत्तावधाना काचिच्च तमेव मनसाऽस्मरत् ॥
काचिच्चावसथस्यान्ते स्थित्वा दृष्ट्वा बहिस्तरून् ।
तन्मयत्वेन गोविन्दं दध्यौ मीलितलोचना ॥
तदप्राप्तिमहादुःखविलीनाशेषपातका ।
तच्चिन्ताविमलाह्लादक्षीणपुण्यचया तथा ॥
चिन्तयन्ती जगत्सूतिं परब्रह्मस्वरूपिणम् ।
निरुच्छ्वासतया मुक्तिं गताऽन्या गोपकन्यका ॥

(iii. iv. v.) v. 7-12=*Bhāg. pur*. X. 29. 19-22, 29-32

रजन्येषा घोररूपा घोरसत्त्वनिषेविता । प्रतियात व्रजं नेह स्थेयं स्त्रीभिः सुमध्यमाः ।
तद्यते सा चिरं गोष्ठं शुश्रूषध्वं पतीन् सतीः ॥
मैवं विभोऽर्हति भवान् गदितुं नृशंसं सन्त्यज्य सर्वविषयांस्तव पादमूलम् ।
भक्त्या भजस्व दुरवग्रह मा त्यजास्मान्……
यत् पत्यपत्यसुहृदामनुवृत्तिरङ्ग स्त्रीणां स्वधर्म इति धर्मविदा त्वयोक्तम् ।
अस्त्वेवमेतदुपदेशपदे त्वमीशे प्रेष्ठो भवांस्तनुभृतां किल बन्धुरात्मा ॥

(vi) v. 31, 32=*Bhāg. pur.* X. 30. 35-36

इत्येवं दर्शयन्त्यस्तारचेरुर्गोप्यो विचेतसः ।
यां गोपीमनयत् कृष्णो विहायान्याः स्त्रियो वने ।
सा च मेने तदात्मानं वरिष्ठं सर्वयोषिताम् ।
हित्वा गोपीः कामयाना मामसौ भजते प्रियः ॥

(vii. viii. ix.) v. 34-54=*Bhāg. pur.* 30. 2-3, 15-23

गत्याऽनुरागस्मितविभ्रमेक्षितैः... ।
आक्षिप्तचित्ताः प्रमदा रमापतेस्तास्ता विचेष्टा जगृहुस्तदात्मिकाः ॥
...प्रियाः प्रियस्य प्रतिरूढमूर्तयः ।
असावहन्त्वित्यबलास्तदात्मिका न्यवेदिषुः कृष्णविहारविभ्रमाः ॥
कस्याश्चित् पूतनायन्त्याः कृष्णायन्त्यपिबत् स्तनम् ।
तोकायित्वा रुदत्यन्या पदाहन् शकटायतीम् ।
बद्धाऽन्यया स्रजा काचित्तन्वी तत्र उलूखले ।
भीता सुदृक् पिधायास्यं भेजे भीतिविडम्बनम् ॥...

(x) v. 72-75=*Bhāg. pur.* X. 30. 26-28

एवं कृष्णं पृच्छमाना वृन्दावनलतास्तरून् । व्यचक्षत वनोद्देशे पदानि परमात्मनः ।
पदानि व्यक्तमेतानि नन्दसूनोर्महात्मनः । लक्ष्यन्ते हि ध्वजाम्भोजवज्राङ्कुशयवादिभिः ॥
तैस्तैः पदैस्तत्पदवीमन्विच्छन्त्योऽग्रतोऽबलाः ।
बध्वाः पदैः सुपृक्तानि विलोक्यार्ताः समब्रुवन् ॥

(xi) v. 76-87=*Viṣ. pur.* V. 13. 33–40

काऽपि तेन समायाता कृतपुण्यया मदालसा । पदानि तस्याश्चैतानि···
नूनमुक्ता त्वरामोति पुनरेष्यामि तेऽन्तिकम् । तेन कृष्णेन येनैषा त्वरिता पदपद्धतिः ॥

(xii) v. 88=*Bhāg. pur.* X. 30. 31–34

न लक्ष्यन्ते पदान्यत्र तस्या ननं तृणाङ्कुरैः ।...
इमान्यधिकमग्नानि पदानि वहतो वधूम् ।...
अत्रावरोपिता कान्ता पुष्पहेतोर्महात्मना ।...प्रपदाक्रमणे एते पश्यता सकले पदे ॥

(xiii-xiv) v. 104, 105, 113=*Bhāg. pur.* X. 33. 22-24

ताभिर्युतः श्रममपोहितुः...स... ।
गन्धर्वपालिभिरनुद्रुत आविशद्वाः श्रान्तो गजीभिरिभराडिव भिन्नसेतुः ॥

ततश्च कृष्णोपवने जलस्थलप्रसूनगन्धानिलजुष्टदिक्तटे ।
चचार भृशं प्रमदागणावृतो यथा मदच्युद्दिरदः करेणुभिः ॥

(xv) v. 117=*Viṣ. pur*. V. 14. 1-5, 33

प्रदोषार्धे कदाचित्तु रसासक्ते जनार्दने ।
त्रासयन् समदो गोष्ठमरिष्टः समुपागमत् ॥ दैत्यो वृषभरूपधृक् ।
उत्पाट्य शृङ्गमेकन्तु तेनैवाताड़यत्ततः ! ममार स महादैत्यो मुखाच्छोणितमुद्वमन् ॥

## XI

(i) v. 1-3=*Viṣ. pur*. V. 15. 1-4

ककुद्मति हतेऽरिष्टे धेनुके विनिपातिते । प्रलम्बे निधनं नीते...
दमिते कालिये नागे भग्ने तुङ्गद्रुमद्वये । हतायां पूतनायाञ्च शकटे परिवर्तिते ।
कंसाय नारदः प्राह यथावृत्तमनुक्रमात् ।...वसुदेवं प्रति तदा कोपञ्चक्रे महामतिः ॥

(ii) v. 4, 5=*Hariv*. II. 22. 70-71

कालस्त्वं हि विनाशाय मया पृष्टोऽविजानता ।
वसुदेवकुलस्यास्य यद्विरोधयसे भृशम् ।
अमर्षी वैरशीलश्च यदा पापमतिः शठः । स्थाने यदुकुलं मूढ़ शोचनीयं त्वया कृतम् ॥

(iii & iv) v. 10, 11=*Viṣ. pur*. V. 15. 13-15, 22

भो भो दानपते वाक्यं क्रियतां प्रीयते मम ।...गम्यतां नन्दगोकुलम् ।
वसुदेवसुतौ तत्र... । नाशाय किल सम्भूतौ मम दुष्टौ प्रवर्धतः ॥
धनुर्महो ममाप्यत्र चतुर्दश्यां भविष्यति । आनेयौ भवता गत्वा मल्लयुद्धाय तत्र तौ ॥
यथा च माहिषं सर्पिर्दधि चाप्युपहार्यं वै ।
गोपाः समानयन्त्याशु तथा वाच्यास्त्वया च ते ॥

(v. vi & vii). v. 12-18=*Viṣ*. V. 16-1-2, 10-15.

केशी चापि बलोदग्रः कंसदूतप्रचोदितः । कृष्णस्य निधनाकाङ्क्षी वृन्दावनमुपागमत् ॥
स खरक्षतभूपृष्ठः सटाक्षेपधताम्बुदः ।...
केशिनो वदने तेन विशता कृष्णबाहुना । शातिता दशनाः पेतुः सिताभ्रावयवा इव ॥
कृष्णस्य ववृधे बाहुः केशिदेहगतो द्विज । विनाशाय यथा व्याधिरसम्भूतेरुपेक्षितः ।
सोऽक्षिणी विवृते चक्रे ... । निपातितो द्विधा भूमौ वैद्युतेन यथा द्रुमः ॥
द्विपादे पृष्टपुच्छार्धे श्रवणैकाक्षिनासिके केशिनस्ते द्विधा भूते शकले द्वे विरेजतुः ॥

(viii) v. 19-22 = *Viṣṇupur.* v. 16.22, 24

तुरङ्गस्यास्य शक्रोऽपि कृष्ण देवाश्च बिभ्यति ।
यस्मात्त्वयैष दुष्टात्मा हतः केशी जनार्दन ।
तस्मात् केशवनाम्ना त्वं लोके ख्यातो भविष्यसि ॥

(ix) v. 25-27 = *Viṣṇupur.* v. 17. 2-5.

चिन्तयामास चाक्रूरो नास्ति धन्यतरो मया ।
सोऽहमंशावतीर्णस्य विष्णोर्द्रक्ष्याम्यहं मुखम् ॥
अद्य मे सफलं जन्म...। यदुन्निद्राब्जपत्राक्षं विष्णोर्द्रक्ष्याम्यहं मुखम् ।
विनिर्जग्मुर्यतो वेदा वेदाङ्गान्यखिलानि च ।
द्रक्ष्यामि तत् परं धाम धाम्नां भगवतो मुखम् ॥

(x) v. 29-38 = *Viṣṇupur.* v. 17. 9-12

सर्वात्मा सर्ववित्...। यो ह्यचिन्त्योऽव्ययो व्यापी स वक्ष्यति मया सह ।
मत्स्यकूर्मवराहाश्वसिंहरूपादिभिः स्थितिम् ।
चकार जगतां सोऽजः सोऽद्य मां प्रलपिष्यति ॥

(xi) v. 39-40 = *Bhāg. pur.* x. 38. 20-26

तद्दर्शनाह्लादविवृद्धसम्भ्रमः...रथादवस्कन्द्य स तेष्वचेष्टत प्रभोरमून्यङ्घ्रिरजांस्यहो इति ।
ददर्श कृष्णं रामञ्च व्रजे गोदोहनं गते ।

(xii) v. 57-61 = *Hariv.* II. 26. 2, 16-17, 27-28

कृष्णं चैवाब्रवीत्...। श्वः पुरीं मथुरां तात गमिष्यामः ।...
वृद्धौ भवद्भ्यां पितरौ । भर्त्सितौ त्वत्कृते नित्यं कंसेनाशुभबुद्धिना ।
यदि ते देवकी मान्या पृथिवी वाऽऽत्मधारिणी ।
तां शोकसलिले मग्नामुत्तारयितुमर्हसि । ते च गोपाः समागम्यः··· ॥
अक्रूरवचनं श्रुत्वा चेलुः कंसस्य शासनीम् (?) । गमनाय च ते सज्जा बभूवुर्व्रजवासिनः ॥

## XII

(i) v. 18 = *Viṣṇupur.* v. 19. 12-15

इत्युक्त्वा प्रविवेशाथ सोऽक्रूरो मथुरां पुरीम् ।
प्रविष्टौ रामकृष्णौ च राजमार्गमुपागतौ । स्त्रीभिर्नरैश्च सानन्दं लोचनैरभिवीक्षितौ ॥
भ्रममानौ ततो दृष्ट्वा रजकं रथकारकम् । अयाचेतां सुरूपाणि वासांसि रुचिराणि तौ ।

(ii) v. 38 = *Bhāg. pur*. x. 39. 44-55

भूयस्तत्रापि सोऽद्राक्षीत् स्तूयमानमहीश्वरम् ।......

भ्राजमानं पद्मकरं शङ्खचक्रगदाधरम् । श्रीवत्सवक्षसं भ्राजत् कौस्तुभं वनमालिनम् ।

(iii,iv) v. 51-55 = *Hariv*. II. 24. 66-70

कृत्यशेषं च ते कार्य्यं शक्रस्त्वमसि मा चिरम् ।...

अभ्यासे वर्त्तते कालो भारतस्याहवो दधे ।...

उग्रसेनसुते शास्ते पदस्थे त्वयि केशव । अमितस्तन्महत् युद्धं भविष्यति महीक्षिताम् ।

(v, vi) v. 57-61 = *Bhāg. pur*. x. 41. 3-5,10

तमपृच्छद्धृषीकेशः किं ते दृष्टमिवाद्भुतम् । भूमौ वियति तोये वा तथा त्वां लक्षयामहे ।

श्रीअक्रूरउवाच–अद्भुतानीह यावन्ति...। त्वयि विश्वात्मके तानि किं मे दृष्टं विपश्यतः ।।

भवान् प्रविशतामग्रे सहयानः पुरीं गृहम् । वयं हित्वावमुच्याथ ततो द्रक्ष्यामहे पुरीम् ।।

(vii) v. 70-78 = *Viṣṇupur*. v. 19. 13-28

जग्मतुर्लीलया वीरौ मत्तौ वनगजाविव ।

भ्रममाणौ ततो दृष्ट्वा रजकं रंगकारकम् । अयाचेतां सुरूपाणि वासांसि रुचिराणि तौ ।।

ततस्तलप्रहारेण कृष्णस्तस्य दुरात्मनः । पातयामास रोषेण रजकस्य शिरो भुवि ।।

कृष्णरामौ मुदा युक्तौ मालाकारगृहं गतौ ।...

(vii, ix) v. 79-80 = *Bhāg. pur*. x. 43,48,50

ततः सुदाम्नो भवनं मालाकारस्य जग्मतुः । तौ दृष्ट्वा स समुत्थाय ननाम शिरसा भुवि ।।

तावाज्ञापयतं भृत्यं किमहं करवाणि वाम् ।...

इत्यभिप्रेत्य राजेन्द्रः सुदामा प्रीतमानसः । सप्तैः सुगन्धैः कुसुमैर्माला विरचिता ददौ ।

ताभिः स्वलङ्कृतौ प्रीतौ कृष्णरामौ सहानुगैः । प्रणताम् प्रपथान्यैः ददतुर्वरदौ वरान् ।

(x) v. 82 = *Viṣṇupur*. v. 20. 3-5

सकामेनेव सा प्रोक्ता सानुरागा हरिं प्रति ।

प्राह सा ललितं कुब्जा तद्दर्शनबलात्कृता...

(xi,xii) v. 93, 94 = *Viṣṇupur*. v. 2. 14-18

भक्तिभेदानुलिप्ताङ्गौ नीलपीताम्बरौ तु तौ

धनुःशालां ततो यातौ चित्रमाल्योपशोभितौ ।

···सहसा कृष्णो गृहीत्वाऽपूरयद्धनुः ।

ततः पूरयता तेन भज्यमानं महद्धनुः । चकार सुमहच्छब्दं मथुरा येन पूरिता ।।

## XIII

(i+ii) v. 5-10=*Viṣ. pur.* V. 20. 16-19

ततः पूरयता तेन भज्यमानं बलाद्धनुः ।
अनुयुक्तौ ततस्तौ तु भग्ने धनुषि रक्षिभिः ।
रक्षिसैन्यं निहत्योभौ निष्क्रान्तौ कार्मुकालयम् ।
कंस उवाच—गोपालदारकौ प्राप्तौ भवद्भ्यां तु ममाग्रतः ।
मल्लयुद्धेन हन्तव्यौ मम प्राणहरौ हि तौ ॥

(iii) v. 12=*Bhāg. pur.* X. 42. 26, 27

कंसस्तु धनुषो भङ्गं रक्षिणां स्वबलस्य च ।
वधं निशम्य गोविन्दरामविक्रीडितं परम् ॥
दीर्घप्रजागरे भीतो दुर्निमित्तानि दुर्मतिः ।
बहून्यचष्टोभयस्य मृत्योर्दौत्यकराणि च ॥

(iv) v. 28=*Viṣ. pur.* V. 20. 23

स्थाप्यः कुवलयापीडस्तेन तौ गोपदारकौ ।
घातनीयौ नियुद्धाय रङ्गद्वारमुपागतौ ॥

(v) v. 30=*Bhāg. pur.* X. 42. 33-34

मञ्चाश्चालङ्कृताः स्रग्भिः पताकाचैलतोरणैः ।
तेषु पौरा जानपदा ब्रह्मक्षत्रपुरोगमाः । यथोपजोषं विविशू राजानश्च कृतासनाः ॥

(vi) v. 32=*Viṣ. pur.* V. 20. 26

नन्दगोपादयो गोपा मञ्चेष्वन्येष्ववस्थिताः । अक्रूरवसुदेवौ च मञ्चप्रान्ते व्यवस्थितौ ।

(vii) v. 34, 35=*Hariv.* II. 29, 41, 42

तांश्च हत्वा विविशतुर्मध्यं रङ्गस्य तावुभौ । नासत्यावश्विनौ स्वर्गादवतीर्णाविवेच्छया ।
वृष्ण्यन्धकाश्च भोजाश्च दद्दशुर्वनमालिनौ ॥
क्षुभितोत्क्रुष्टनादेन बाह्वोरास्फोटितेन च ।
सिंहनादैश्च तालैश्च हर्षयामासतुर्जनम् ॥

(viii, ix) v. 39-43. *Viṣ. pur.* V. 20. 31-38

मृगमध्ये यथा सिंहौ... । प्रविष्टौ सुमहारङ्गं बलदेवजनार्दनौ ।
ततः कुवलयापीडो महामात्रप्रचोदितः । अभ्यधावत वेगेन हन्तुं गोपकुमारकौ...
सिंहनादं ततश्चक्रे माधवः परवीरहा । करेण करमाकृष्य तस्य केशिनिषूदनः ॥
भ्रामयामास तं शौरिः । उत्पाट्य वामदन्तं तु दक्षिणेनैव पाणिना ।
ताडयामास यन्तारं तस्यासीच्छतधा शिरः ॥

(x+xi) v. 41-44=*Viṣ. pur*. V. 20. 40, 42-50

ततस्तूत्प्लुत्य वेगेन रौहिणेयो महाबलः। जघान वामपादेन मस्तके हस्तिनं रुषा।

हत्वा कुवलयापीडं...मेदासृगनुलिप्ताङ्गौ हस्तिदन्तवरायुधौ।

हाहाकारो महान् जज्ञे रङ्गमध्ये त्वनन्तरम्॥

...सोऽयं येन हता घोरा पूतना...। अयं स कथ्यते प्राज्ञैः...।

...यादवं वंशं मग्नमभ्युद्धरिष्यति।

अयं हि सर्वलोकस्य विष्णोरखिलजन्मनः।

अवतीर्णो महीमंशो नूनं भारहरो भुवः।

(xii+xiii) v. 53, 56-57=*Bhāg. pur*. X. 44. 20-24

भगवद्गात्रनिष्पातैर्वज्रनिष्पेषनिष्ठुरैः। चाणूरो भज्यमानाङ्गो मुहुर्ग्लानिमवाप ह॥

...बाह्वोर्निगृह्य चाणूरं बहुशो भ्रामयन् हरिः।

भूपृष्ठे पोथयामास...इन्द्रध्वज इवापतत्॥

(xiv+xv) v. 59-61.=*Viṣ. pur*. V. 20. 64, 69-71

बलभद्रोऽपि ...चाणूरेण समं हरिः॥ चास्फोट्य ववल्ग ललितं तथा।

...कृष्णोऽपि युयुधे तेन लीलयैव जगन्मयः।

बलक्षयं विवृद्धिं च दृष्ट्वा चाणूरकृष्णयोः।

वारयामास तूर्याणि कंसः कोपपरायणः॥

(xvi) v. 63=*Viṣ. pur*. V. 20. 73

जय गोविन्द चाणूरं जहि केशव दानवम्।

अन्तर्धानगता देवास्तमूचुरतिहर्षिताः

(xvii) v. 64, 65=*Bhāg. pur*. X. 44. 35-36

तमाविशन्तमालोक्य मृत्युमात्मन आसनात्।

मनस्वी सहसोत्थाय जगृहे सोऽसिचर्मणी॥

तं खड्गपाणिं...। समग्रहीद् विषहोग्रतेजा यथोरगं तार्क्ष्यसुतः प्रसह्य॥

(xviii) v. 68=*Hariv*. II. 30. 92

बलदेवोऽपि धर्मात्मा कंसभ्रातरमूर्जितम्॥

बाहुभ्यामेव तरसा सुनामानमपोथयत्॥

(xix) v. 71=*Viṣ. pur*. V. 20. 94-95

प्रसीद सीदतां दत्तो देवानां यो वरः प्रभो।...कृतोद्धारः स केशव॥

आराधितो यद्भगवानवतीर्णो गृहे मम। दुर्वृत्तनिधनार्थाय तेन नः पावितं कुलम्॥

(xx) v. 80=*Hariv*. II. 32. 4

अहो मयाऽतिबाल्येन रोषाद्दोषानुवर्तिना।

वैधव्यं स्त्रीसहस्राणां कंसस्यास्य वधे कृतम्॥

# Appendix C

## Commentary on Select Verses

VIII, 58-84, 92, 93, 95-97, 102, 103, 105

५८। हलिना बलरामेन कृष्णो जगदे (८।४६) इति प्रकरणोद्देशः। हे अहिकाय महाभुज इदं महि काननमुद्वीक्ष्य महिकारश्मिवत् का महिमा अतिरोचते इत्यन्वयः। हे अजगरसदृश विपुलायतभुज श्रीकृष्ण! आजानुलम्बितभुजत्वं महापुरुषलक्षणम्। इदं परिदृश्यमानं महिकावनं वृन्दावनैकदेशभूतं काननं, 'कृदिकारादक्तिन' इति 'मही'शब्दस्य वैकल्पिकं ह्रस्वान्तत्वम्। उद्वीक्ष्य उद्वीक्ष्य स्थितानां नोऽस्माकं महिका तुषारस्तस्या रश्मिः किरणच्छटा सा विद्यते यस्य कस्य जलस्य तादृशी नीहारच्छटाभासुरा महिका क्षुद्रा मही स्थलीति यावत्। अति अतितरां रोचते अस्माकमतिप्रिया भवति। 'अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम्। प्रालेयं महिका' चेत्यमरः। अत्र चतुर्ष्वेव पादेषु 'महिके'ति पदद्वारा पादादियमकम्।

५९। वातायूनां वातायूनां गतिं जेतुमक्षमा किल मयूरावलिः उत्क्रान्तमयूरावमजहात् इत्यन्वयः। वातायूनाम् अनुकूलं वायुमुद्दिश्य अतएवातिवेगेन धावतां वातायूनां मृगाणां 'मृगे कुरङ्गवातायुहरिणाजिनयोनय' इति मृगपर्यायेऽमरः। मयवः किन्नरभेदाः 'स्यात् किन्नरः किम्पुरुषस्तुरङ्गवदनो मयुः' इत्यमरः। तेषां रावः ध्वनिः। 'विरावारावसंरावा' इत्यमरः। "उपसर्गयुक्ते रुवः" इति पाणिन्यनुशासनादुपसर्गयुक्ते एव घञ् विहितः; तथापि यमकानुरोधात् कथमपि सोढव्यम्। 'शरदि हंसरवाः परुषीकृतस्वर-मयूरमयूरमणीयताम्' इति माघपद्यम्। उत्क्रान्तोऽतिशयितो मयूनां रावो यत्र तत् यथा स्यात्तथेति क्रियाविशेषणम्। अजहात् त्यक्तवतीति मयूरावलिरित्यनेनान्वेति। तत् स्थानमिति कर्माध्याहारः। अक्षमस्य रङ्गभूमित्याग इवायं क्रमः। पूर्वार्धे पादद्वये वातायूनामिति उत्तरार्धे मयूरावेति पादद्वये यमकम्।

६०। इह तदीयानां मानवानां तथा नवानां दाराणाम् उ अणवपि दुःखं मा भूत्। हे हरे! तदीयानां त्वत्सहचारिणां मानवानां व्रजवासिगोपपुरुषाणां तथा नवानां किशोराणां दाराणां गोपीनाम् उ पादपूरणे। यद्यपि 'रुषोक्तावु' इत्यमरानुशासनं तथापि सामान्यतः पादपूरणेऽयं निपातः। अणवपि दुःखं स्वल्पाऽपि वेदना मा भूदित्याशंसा। अत्र 'मानवानामि'त्ययुक्पादयोः 'मुदाराणा'मिति युक्पादयोः स्वरव्यञ्जनसंहतेर्यमनाद्यमकम्।

६१। धात्रा अम्बरे सरोहितवरा कादम्बिनी अर्पिता। आरम्ये कादम्बिनि इह सवः अद्भुतमस्तं हितमित्यन्वयः। धात्रा निसर्गविधानपटुना स्रष्ट्रा अम्बरे आकाशे दिवि सरोहितवरा लौहित्यामायुता 'रोहितं कुङ्कुमे रक्ते' इति कोषः। कादम्बिनी मेघमाला अर्पिता स्थापिता। आरम्ये परमसुन्दरे कादम्बिनि कलहंसपरिवृते 'कदम्बः कलहंसः स्यात्' इत्यमरः। इह वृन्दावनभागे सरः सरोरूपमद्भुतं विस्मयापादकमस्तं गृहं स्थानमिति यावत्। 'अस गतिदीप्त्यादानेषु' इति गत्यर्थात् निष्ठायां क्तः हितं विहितमित्यर्थे। सरस्यत्र कादम्बा नयनमनस्तर्पणाः राजन्त इति भावः। अत्र 'कादम्बिनी'ति प्रथमचतुर्थयोः पादयोः 'सरोहित' इति द्वितीयतृतीयपादयोर्यमनात् यमकम्।

## अथवा

६२। कैरवैः कैरवैः भूयोभिः कुमुदैः वीप्सायां द्विरुक्तिः। आरि प्राप्तम्। ऋगतिप्रापणयोरिति कर्मणि लुङ्। सर्वत्र कुमुदानि विकशितानि। कैः रवैरनिर्वचनीयैर्विविधैः श्रुतिमधुरैः रवैः कलहंसादीनां मधुरनादैर्वनं वृन्दावनैकदेशस्थमरण्यमावृतं परिपूरितमिति यावत्। 'वा' वितर्के अवधारणे वा। 'वा स्याद्विकल्पोपमयोर्वितर्के पादपूरणे। समुच्चये चे'ति मेदिनी। तथा "स्युरेवं तु पुनर्वा चेत्यवधारणवाचकाः" इति टीकाकृत्सुभूतिधृतामरकोषे पाठः। सारसानां पक्षिविशेषाणां शरदि दृष्टानामारावेण ध्वनिना हीनम्। किं सारसा न नदन्ति अथवा सर्वे एव पक्षिणो रुवन्ति सारसास्तु न दृष्टिगोचराः। अथवा 'वा' इति अथवेत्यर्थे समर्थनसूचकमुत्तर-वाक्येनान्वेति। सारं श्रेष्ठं यत् सारस्यं रूपगतं सुकुमारत्वं शब्दगतं सुश्रवत्वञ्च ईक्ष्यते [लक्षणयेन्द्रियगोचरं भवति। रम्याणि कुमुदकदम्बानि मधुराश्च विहगनादाः] उपलभ्यन्ते। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः। ५९-तम-श्लोक इवात्र यमकम्। यद्वा यमके पृथगर्थत्वनिर्बन्धे कैरवैः कुमुदैर्वनं स्थलप्रान्तमावृतम्। कैरवैः कुमुदैर्वनं जलमावृतमित्यर्थः। सिते 'कुमुदकैरवे' 'कैरवं सितपङ्कजे' 'वनं नपुंसके नीरे निवासालयकानने' इति च कोषः।

६३। हे कृष्ण सरसः सरसः पूर्ववद्वीप्सायां द्विरुक्तिः, सर्वस्मादेव सरोवरात्। मधुरे च मधुरो हि तमिति चतुर्भिः पदैश्छेदः। मधुरो रसः मधुरः स्वादुः। 'मधुरस्तु रसे विश्वे' इति 'स्वादुप्रियौ च मधुरौ' इति च कोषः। हितमित्युत्तरार्धेनान्वितम्। मधुरः मम प्रियस्त्वमिति बलदेवेन कृष्णस्य प्रशस्तिः मधुरोल्लासितं मधुरायां मधुरेति प्रथितायां भूमौ लक्षणया वृन्दावनान्ते उल्लासिनः कालमाहात्म्याच्छोभमानात् सरसः सरोवरात् तं मधुरं रसं सर्वतः सर्वथा एकान्ततया सर गच्छ उपभुङ्क्ष्वेति यावत्। गत्यर्थस्य सरतेः सकर्मकता अत्रापि पृथगर्थत्वनिर्बन्धे सरसः प्रसरण-शीलस्य सरस इति योजना। अत्र प्रथमचतुर्थपादयोरेकक्रमेण द्वितीयतृतीययोरन्याकारेण यमकविन्यासः।

६४। "नागः पन्नगमातङ्गक्रूरचारिषु तोयदे। नागकेशरपुंनागनागदन्तप्रभेदके" इति मेदिनी। अत्र कोषोद्धारे निर्दिष्टानां पराणामर्थानां श्लोकेऽस्मिन्नुद्देशः। प्रथमं नागेति पदं मातङ्ग इत्यर्थे। तृतीयं मेघपर्यायं चतुर्थं हिंस्रजलजन्तुपर्यायं पञ्चमं सर्पपर्यायं सप्तमं नागकेशरपुष्पार्थे; अष्टमन्तु पुंनागतरुपर्यायम्। हस्तिनां युद्धाङ्गतया शरणे वोपयुक्तानामागमनमनुमाय मेघा अर्थात् तदधिष्ठातृनिसर्गशक्तिसंघाः हिंस्रान् जलजन्तून् निरासयन् अपसारितवन्तः। अधुना सर्पाः आगारसदृशमहाकाया न लक्ष्यन्त इति शेषः। नागात् पुंनागतरोः नागाः नागकेशरपुष्पाणि वर्तन्त इति अवेक्ष्यताम्। श्लोकार्थयोजनायां नागादित्थमिति निपातस्याध्याहारः कार्यः। ५८तमश्लोकवत् यमकविन्यासः।

६५। द्वितीयचरणे प्रसादसारसाध्वसेति पाठः। चतुर्थचरणे या अया सा रसालसेति चतुर्भिः पदैश्छेदः। हे संसारसार प्रपञ्चप्रधान प्रपञ्चातिशायिपुरुष ! साभासा दीप्तिमती प्रसादसारेण साध्वसं प्रसन्नाम्भःसरोवराधारे हिल्लोलादिकम्पेन साध्वसं भयं यस्या इति बहुव्रीहिः। तदुक्तादेव त्रासो 'भीतिर्भीः साध्वसं भयमि'त्यमरः। रसाभ्यासादिसाध्वसा रसस्य जलस्याभ्यासेन सन्निकर्षप्रभृत्या साधुः शोभन आस आसनं सत्ता यस्याः सा। सारसालसा सारसादिना पक्षिविशेषैरालसा सततमुल्लसन्ती सा वृन्दावनी जलाशयविशेषिता अया चञ्चला। अय इति गमनार्थकधातोः पचाद्यच् स्त्रियाम्। अत्र षोड़शदलकमलबन्धः मध्ये 'से'ति वर्णः षोड़शदले, 'सं'इत्यादिवर्णानां सन्निवेशात्। परिशिष्टे चित्रं द्रष्टव्यम्।

६६। अहो इति उल्लाससूचकमव्ययम्। अमूं वृन्दावनस्थां महोमञ्जुं महसा तेजसा मञ्जुं मनोहारिणीं महीं स्थलीं वयम् अति अतिशयेन महामहे पूजयामः। 'महः पूजायामि'ति धातुपाठः। श्लाघ्यां मन्यामहे इत्याशयः। अत्र शरदि मतिमतां प्रज्ञावतां मनो महामहे विपुले उत्सवे मङ्क्षु झटिति अञ्जसा वा लग्नं व्यापृतं भवति। वृन्दावनस्य स्थानमाहात्म्यं शास्त्रतत्त्वविदामपरोक्षमेव। अत्र षोड़श'म'संनिवेशात् एक एव षोड़शदलकमलभेदः। उभयोरर्धयोरन्ते यमकम्।

६७। हे जिष्णो जयशील विभो विभवाभ्यर्हित प्रभो निग्रहानुग्रहसमर्थ विष्णो व्यापनशील नररूपिभगवन् 'कृष्णस्तु भगवान् स्वय'मिति वचनात्। त्वम् नोऽस्माकं व्रजवासिनां विनोदे क्रीड़ायां विधिर्विधाता 'विधिर्ब्रह्मविधानयो'रिति कोषानुशासनात्। त्वम् एधि भवेति सानुनयमामन्त्रणम्। विद्याविनायिना विद्यया विनायकेन उपदेष्ट्रा त्वया उरुविद्या परा विद्या आत्मज्ञानसारभूता विपिनेऽपि इह वनेऽपि नाश्रमे न च गुरुकुले परमत्रापि विरूढ़ा विशेषेण प्रथिता। पराया विद्यायास्त्वं प्रवर्तकः। सा च विद्या कृष्णावतारे व्रजभूमावेव त्वया प्रकाशितेति सर्ववादिसम्मतं परं तत्त्वम्।

६८। सता परमार्थविदा ईहिते ईप्सिते सत्ये नित्ये ज्ञाने चिद्रूपे सदामोदासने सर्वदैवानन्दाश्रये अतएव सच्चिदानन्दस्वरूपे स्थाने परब्रह्मणि अहं रमे। 'आत्माराम आत्मक्रीड़ आत्मरति' रित्यादि श्रुतेः।

तथा सत् वर्तमानमामोदसहितं भोगयुतमासनमवस्थानं यस्मिन् तादृशे समे साजात्यरूपेणानुकूले स्थाने भगवता सह सायुज्यलक्षणे इह इह लोके न तु विदेहमुक्त्या साधिते परलोके। रमे सुखमनुभवामि। अष्टदलपद्मबन्धस्य चित्रं 'घ' (App.D)-परिशिष्टे द्रष्टव्यम्।

६९। हे केशव ! त्वया हेतुना प्रयोजकेन वा अयामित्रमालिके अया अगतिशीला अय गतौ पचाद्यचि स्त्रियां टाप्। अमित्राणां कालियपूतनादीनां मालिका श्रेणी यस्मिन् तादृशे अभीके विगतभये भीते भये ( भावे निष्ठा) भयहेतौ सति विनिवेशके विशेषेण दृढतया तस्मात् स्वस्मिन् समाहिताभिनिवेशे इह व्रजे के केलिं क्रीड़ां लीलाञ्च न आतन्वते न विदधति। अपि तु सर्व एव सुखं क्रीड़न्तीति भावः। ( एषां सहचारिणां पुराणादिषु भगवतोऽंशावतारत्वेन वर्णितत्वात् ) न आतन्वते न विदधति। अपितु सर्वएव सुखं क्रीड़न्तीति भावः।

७०। हे आत्मना इन स्वयं प्रभो न तु परतन्त्र ! अस्मिन् कानने वृन्दावनविपिने शुभा श्रेयस्करी अशोका शोकमोहादेरतिरिक्ता। 'तरति शोकमात्मविदि'-तिवत् शोकशब्दस्यात्र लक्षणया तात्पर्यम्। कायिशान्तिकृदालोका कायिनां शरीरिणां शान्तिमाधिव्याधिप्रभृतित उपरमं करोति यः। क्विप्, पिति कृति तुगागमश्च। तादृश आलोकोऽज्ञानजनित मो ध्वंसो दर्शनं वा यत्र सा का शोभा न अतिशायिका सर्वैवाभिरामा। कालोकात् स्वर्गदर्शनात् अथवा प्रशस्तेन्द्रचन्द्रादि-कुत्सितलोकात् का न अतिशायिका न तस्य प्रतिस्पर्धिनी च। यद्वा, आत्मने न केति पृथग्वाक्यम्। आत्मावाप्तौ परपदलाभाय का न भवति ईदृशी शोभा सर्वथैव प्रभवतीति वृन्दावनमाहात्म्यवादिनां सिद्धान्तानुवादः।

७१। इह विमलानि जलानि मध्ये नार्वाम्भसा ना नेत्यर्थे अर्वाम्भं निन्दिताम्भम् 'अर्वा तुरङ्गमे पुंसि निन्दिते वाच्यलिङ्गवदि'ति कोषः। अम्भःशब्दस्य द्विरूपता। रजःख्यातं रजं मतमिति पुरुषोत्तमविधानरीत्या साधनीया। शं सुखं, जलसुखयुक्तेति कथञ्चित् प्रतीतिः। ईदृशी वनी वनभूमिः तटस्तटी तटमितिवत् त्रिलिङ्गता। रुच्या शोभया लाना युक्ता, लेति धातुः प्राप्त्यर्थे पठ्यते। महाशाला बृहदागारा निर्वाच्या, अनिर्वचनीयगुणा अस्ति। अत्र विश्रमं भजेति योजना। यद्वा, द्वितीयतृतीयचरणयोः यथाक्रमं मध्ये नार्वाम्मसा वनी लाना रुच्या महाशालेत्यपि

——→
↓ वि म ला ↓ नि ज ला नी ह
——→
दन्त्यसकारान्तः पाठः। तदा म ↓ ध्ये ↓ ना र्वा म्भ शा (सा) व ↑ नी
——→
द्वितीयचरणे ना निन्दितेन ला ना रु च्या म ↑ हा शा (सा) ला ↑
——→
अम्भसा उपलक्षिता वनी। नि र्वा च्या वि श्र म म्भ ज

तृतीयचरणे महासाला महाप्राकारा महावृक्षा वा। 'प्राकारे वरणः सालः वृक्षो महीरुहः शाखी'त्यादि 'अनोकहः कुटः साल' इति च कोषात्। अर्धभ्रमबन्धो रेखाभिः पार्श्वस्थचित्रे सूचितः। एवमनन्तर श्लोकेऽपि।

७२। नाथानन्दसङ्गमेति चतुर्थचरणे पाठः। अङ्ग भोः! रमानाथ पालक
मानाहीन सदाऽपाय नाथ
आनन्दद सङ्गमेति सर्वाणि पदानि
सम्बुद्धयाम्। सदाऽपाय सर्वदा
ऽनिष्टान्तरापदुद्धारद्वारा
वा तादृश हे आनन्ददसङ्गम संयोगेन साहचर्येण सुखदायिन्। त्वं परमनामयकरः श्रेष्ठं यत् सुखं तस्य निदानभूतो भवसि।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| प | र | मा | ना | म | य | क | रो |
| र | मा | ना | था | ङ्ग | पा | ल | क |
| मा | ना | ही | न | स | दा | पा | य |
| ना | था | न | न्द | द | स | ङ्ग | म |

७३। हे साररसायाम श्रेष्ठरसायतप्रकाश! हे तायाभ विततविभवदीप्ते! शृङ्गाररससर्वस्वेति लीलाशुकवचनेति यावत्। अङ्गङ्गतामया अङ्गङ्गतः अवयवी अलुक्समासः आमयोऽसुखं यस्यास्तादृशी या मायेति यावत्। मया याता सा भयातासा संसारादिभीतेः सम्यक् क्षयकरी 'तस्युपक्षये' इति धातुपाठपठिताद्धातोर्धञ्। रङ्गभङ्गङ्गमम् तव लीलारूपरसरङ्गस्य उच्छेदं गच्छतीति रङ्गभङ्गङ्गम। खचि मुम्। तादृशं भं भ्रान्ति गर सिञ्च। तव लीलाप्राकट्यमविच्छिन्नं भवत्विति। एषु श्लोकेषु बलदेवमुखेन कवेर्मनो-रथाविष्कारः।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| म | या | सा | र | र | सा | या | म |
| या | म | ता | ङ्ग | ङ्ग | ता | म | या |
| ↓सा | ता | या | म | म | या | ता | सा |
| र | ङ्ग | म | ङ्ग | ङ्ग | म | ङ्ग | र |

७४। हे महामोहदमोदाम अतिमात्रानन्दाभिभवदमने प्रबलशक्तियुक्त! हे अक्षद हे लक्ष्यप्रापक 'अक्षू व्याप्तावि'ति धातोरचि अक्षः। त्वं मम हारिमोक्षक्षमः अन्ते परत्र सर्वक्लेशनाशक मोक्षदाने समर्थः अरिहा इह च शत्रुनाशक! त्वं कीदृशः? मोमोहः मा लक्ष्मीः उमा पार्वती तयोरूहः वितर्कस्थानं त्वं लक्ष्मीः शक्तिश्च पार्वतीति शाक्तानां तद्भक्तानां सिद्धान्तः। दक्षं निपुणं यथा स्यात् तथा मम होमोथः होमस्य यज्ञस्य सर्वविधस्य। कर्मणः कर्मैव यज्ञो यज्ञार्थमेव कर्मेति च श्रीभगवन्निर्देशात्। उमः निर्विघ्नमाश्रयस्थानं पोतानामिव कर्मणाम्। अस्तु प्राप्यं भवतु। दक्षमस्तु अः त्वम् अक्षतेति पदैश्छेदः। अः अच्युतः 'अकारो विष्णुरुद्दिष्ट' इति स्मरणात्। उः शिवं मिमीते इति असुन् बाहुलकात् डिच।

७५। मारातेऽनुतमालिके इति चतुर्थचरणे पदच्छेदः माराते लक्ष्मीदत्ते शोभा-करे इति यावत्। अनुतमालिके अनुता न कदापि नम्रा शीर्णा वा मालिका मल्लिका यत्र। उपलक्षणमेतत् पुष्पितानां लतानां च। तथा च उरूच्चो जनने अलौकिकसुषमावति कानने अने जनेन मल्लक्षणेन का रामा केलिं क्रीड़ामातनोति विदधाति। न सर्वेति यावत्।

७६। हे दारसमीरसं दायां दाने रसति लसतीति दारसः सीरं सूर्य लक्षणया तापं स्यति अन्तयतीति सीरसः। दारसः सीरसश्चित्तकर्मत्वात् तत्सम्बुद्धौ स्वभक्तिदानेन प्रीतिमन् तस्य त्रितापनाशिन्! सरसी जलक्रीड़ोपयोगिजलाशयः। त्वया सरदायाने प्रसृमरलीलाप्रयाणे नेया उपयोज्या। इय-मुद्दीपनविभावभूता। कीदृशी सरसी? सारसारवलीलासा सारात् सारे सावलीलमवलीलमानः स्थितिर्यस्याः। लीलयतेर्नामधातोरवोपसर्गस्य अल्लोपः। सालाल्लीवरसारसा सालालो प्राकारश्रेणी जलमयी सा इव वराः सारसा यत्र। वर्णवैचित्र्यात् सीरः स्यादंशुमालिनि। लाङ्गलीति हैमः।

७७। पद्मापद्धसितामिता इति द्वितीयचरणे, तामिता सिद्धपद्मापहावेति तृतीयचतुर्थचरणयोश्च पाठः। असौ सरसीति पूर्वश्लोके प्रथमान्तेनानुषङ्गः। हासमासम् आह हास्यप्रकाशपूर्वमाह कललाप्येव। आपत् मा आपत् हसितामिता इति च्छेदः। हसिता हासपूर्वं तुच्छीकृता अमिता अतिगुर्वी आपत् मा आपत् न कदापि कं प्राप्नोतु। माङि लुङ्, लुङि अकारलोपः। आसां सालालीनामिति पूर्वेणानुषङ्गः। कीदृशी? असमासहा समायाः मनुस्यसंहतेरसहानुपयोगिनी, तथा तामिता सिद्धपद्मापहारा तामितः क्लान्तः असिद्धः अस्वभावसिद्धः पद्मेषु अपहारः दूरीकृतविरोधि-भावहावादिः विलासव्यत्ययभावव्यक्तिरिति यावत्।

७८। हे बकासुर हे बकासुरप्राणनाशक! बकबखयोर्द्विरूपता स्मर्यते। गोपसुखावहे सालतालवने। गोसारमानेनेव पृथिवीसारमानदण्डेनेव तुलायामिव परिमापकेन। नेमा रसा अर्धेयं भूमिः। नेमशब्दः अर्धार्थे सर्वनामप्रकृतिरनुशिष्यते। लतालसा लतानां स्पन्दनेन कम्पनशीला।

७९–८०। हे त! अच्युत वाङ्मनसोरन्तरङ्गेण वाङ्मनसोरन्तर्यामिन् प्रभो! वाङ्मनामिति शब्दाशुद्धिः दुष्टा। कालोदारवशात् ऋतुमाहात्म्यात् बत इहामन्त्रणे। खेदानुकम्पासन्तोष-विस्मयामन्त्रणे बतेत्यमरः। नीपदीप्रसालालीरमारासप्रसङ्गया कदम्बदीप्तियुतया आम्रसंहत्या करणेन लक्ष्मीविलासप्रसक्त्या शोभाऽवसरेण विशेषणं विशेष्याभिधायि। सारप्रदीपनी श्रेष्ठप्रकाशिका सप्रसरा विस्तृतिमाप्नुवती या मारलीला कामवृत्तिः तद्वशा तत्परतन्त्रा। मनाङ्मवा वरदालोका दर्शनेनाप्यभीष्टपूरयित्री मनाक् ईषत् अनङ्गेरं कामप्रापकं यथा स्यात्तथा चेत् इत्यध्याहार्यम्। मवा बन्धनकारिणी मव बन्धन इति धातुपाठः। अनङ्गेरं त मनाक् मवा इति चतुर्थचरणे पदच्छेदः।

८१। तापिनी न जरेत् वस्यात् आमोदासवमावदे इत्युत्तरार्धे पदानां छेदः। आमोदासवमावदे सौरभेण सुराघ्राणप्रदे इह कानने घनभावेन निविड़तया तापिनी सौरामा सूर्यातपः न वसति। शरदृतुत्वात् सूर्यो नात्युष्णः। सा च सौरामा सूर्यातपदीप्तिर्न जरेत् जीर्णतामियात् परन्तु वस्यात् अवतिष्ठेत् स्वल्पतयेति यावत्।

८२। ईदृशप्रशस्तलग्ने देवभावसदामोदा देवभावेन प्रफुल्ला जननी पिता च स्यात् भवितुमर्हति। असौ जननी पिता वा कदा? नवे नवे उदग्रे भानघने दीप्तिनिविड़े। अस्मिन् समये का न सवमारा उत्सवाड़म्बरयुक्ता नहती सन्नद्धा भवेदिति शेषः। नहतीति नामधातोर्भ्वादिगणत्वात् शतरि स्त्रियां ङीप्।

८३। हे अनघ प्रचुरविभवेन निर्दोष सातनते मङ्गलप्रीत्यानुकूल्यकारिन् नुत प्रशस्त तथा मदवत्रा मदयुक्तानां मानिनामवेन रक्षणेन त्राणं सङ्कटसमाधा यया। सा तव माता नारीणां नारीश्रेष्ठा सारभूता। हे यजतां जयसिद्धिहेतो दयया कृपया सातं मङ्गलनिधानम् अव रक्ष। ते एते इति कर्म। ते एते द्यावापृथिवी।

८४। हे अवत्रावदमय अवत्रावत् अवत्रा सर्वतस्त्राणं तद्युक्त सर्वतस्त्राणैषिन्। अमय अगतिशील विपन्नानां स्थिराश्रय! मय गताविति धातुपाठः। तस्मात् हे अयद अयः शुभावहो विधिस्तस्य द विधानक्षम आतोऽनुपसर्गे क इति दाधातोः कः। हे घनभ घनश्याम अनघ अपापविद्ध यजतां त्वामुद्दिश्य देवसामान्यं प्रति वा यजतां यागादिकमंरतानां ते एते द्यावापृथिव्यौ इति पूर्वश्लोकवत् प्रतीतिः। सम्बन्धसामान्ये षष्ठी जय प्राप्य। सा नारीणां नारीश्रेष्ठा ते जननी नतसातं तनुते नत्या भक्त्या प्रपत्त्या सातं मङ्गलं तनुते विदधाति। शर्मशात सुखानि चेत्यत्र साप्त्यं दन्त्याद्यपीत्यमरटीका कृतः। साऽपि ते जननी सर्वमङ्गलमङ्गल्येति ८२ श्लोकोक्तस्य समर्थनम्।

९२। भू रि प त्रा वि ट पि नः सु म नः फ ल शा खि नः।
× × × × × × × ×
प रि ष त्रा ढ्य ट लि नः सु म नः फ ल शा खि नः॥

अत्र वृन्दावने इति प्रकरणपरामर्शः। विटपिनो वृक्षा भूरिपत्राः प्रचुरपत्रसमन्विताः सुमनःफलशाखिनः पुष्पैः फलैः शाखाभिश्च युताः। पक्षान्तरे सुमनःफलशाखिनः देवतरवः परिषदाम् इतस्ततः सञ्चरतां पदैः क्विप् त्रा त्राणं तत्र विषये आढ्या धनिनः। प्रार्थितवस्तुवितरणे व्यापृता अतएव टलिनः विक्लवाः। टलि वैक्लव्ये इति धातुपाठः। अतएव न कथमपि वृन्दावनतरूणां समपर्यायाः।

९३। रलः ललः डलयो रलयोश्च व्यत्ययो बहुलमित्याप्तवचनात्। क्रीड़ाशीलश्चञ्चलः समीरण इति यावत्। 'विशेषणमात्रप्रयोगो विशेष्यप्रतिपत्तेरिति वामननिर्देशात्। लसा लसा ललीलाय लोलालाली। रसालसालवत् स्वच्छन्दविहारेण आसः स्थितिरुपवेशनं तेन लोलां जिह्वां लान्ति

आददते व्यवहरन्ति। तादृशा ये अलयः भ्रमरश्रेणी तानलमत्यर्थं सौरैरस्रैः सूर्यकिरणैः सरसे सारसे मृदुनि पद्मे असीसरत् चालयामास।

६५। विनावनि पृथिवीरहितं पार्थिवातिरिक्तम्। विनावनीत्यव्ययीभावे त्रिमुनि व्याकरणमितिवत् विशेष्ययोगः। नववत् नववत् पौनःपुन्येन नूतनमेव प्रतीयमानानि सुकुमारपल्लवयुक्तानि तथा नाना विविधानि अवानानि समन्ततः शब्दायमानप्राणियुक्तानि अतएव नवीनानि वनानीव नानावीनि विविधपक्षीणि। अत्रोपमायां सामान्यत आचार्येण यत्रोद्वेगो न धीमतामित्यनुमोदितः वचनभेदो बन्धगौरवात् सुतरामनिन्द्यः। विनावनं विशेषेण प्रशस्यम्। नुधातोः ल्युः।

६६। असौ देवगणो असन्निकर्षाद् विशिष्यादो योगः। सततं सतां साधूनां सेता संयोगकरणात् सेतुरूपः सतीं शोभनां साततिं मङ्गलपरम्परां सूते जनयति। उपनिषदुक्तप्रेयोरूपेणेति यावत्। अतएव सेता बन्धनहेतुरिति निर्देश इत्यर्थः। ततः अतएव ते सन्तः तासस्तुतः तासे विपर्यये स्तुवन्ति ये तादृशाः विपद्येव देवानां स्मरणापत्तेः। अस्ता इत्यकारप्रश्लिष्टं पदं तृतीयचरणान्तःस्थं चतुर्थचरणस्थपदैरन्वितम्। सततासिता सर्वदैव निन्दितवृत्तसेवनात् कृष्णाः। स्वरूपतश्च कृष्णवर्णत्वेन वर्णिताः। ते ते ते नानाव्यञ्जनाः अस्ता क्षिप्ता विपर्यस्ता सर्वेषां भजनतो बाह्या इति यावत्।

६७। लोलः वायुः लुलोल ललितं ववौ। कीदृशो वायुः? लोललालाललो च लोलां चञ्चलां लालां जिह्वां लालयति ईप्सते गृह्णाति। जनानां जिह्वास्पर्शी। वर्षासु तेन कम्पनोदयो स्यात् शरदि न तथा। पुनः कीदृशः? लेलालुलः लेलां दीप्तिं लुनाति छिनत्ति गृह्णाति च। वायुस्वरूपतारतम्येन। पुनः कीदृशः? उललीलालेल उलानां वन्यपशूनां लीलां शोभां लाति या तादृशी इला पृथिवी स्थली यस्यां तादृशः। पुनः कीदृशः? लुलुलुलु लुलुलुलु इति अव्यक्तं शब्दं कुर्वन् यथा स्यात्तथा लोलो ललितं विलुठन्। लेललोललं लेला दीप्तिमती लोला लक्ष्मीः शोभेति यावत्। तादृशी ला गतिर्यस्य। तद्यथा स्यात्तथा। लल ईप्सायां चुरादि लुल ललितगतौ। लेला दीप्तौ कण्ड्वादिः, ला आदाने इति च धातुपाठः। गोभूवाचस्त्विडा इलेत्यमरः। लोला तु रसनाश्रियोरिति हैमश्च।

१०२। हे कासारसारसविलासहस हे सरोवरीयपद्मविशिष्टप्रकाशरूपहास्येन तुल्यो हसः हास्यं यस्य हे आरसार उत्कृष्टरसं प्रति प्रवणतया गमनशील हे सहतर्पित सारसार युगपदेव प्रसादितं सारः बलं सारः तथ्यं च येन तादृश। का सा स्थली आर कीदृशी सा जगाम कीदृशं सुकृतं विदधौ इति प्रश्नच्छलेन महिमोद्घाटनम्। सारः श्रेष्ठः रतिपति र्नु संसारसारपदं संसारश्रेष्ठस्थानमत्र इदं वृन्दावनं ससार अवतीर्णो नु! रूपबाहुल्यादयं वितर्कः। कीदृशो रतिपतिःससारसार भासावसा सारं श्रेष्ठवस्तु सासयति प्रकाशयति यः सारसारः स्वर्गं तस्य भासो दीप्तिः। तेन सहिता अवसा अवसानं पार्यन्तिकत्वेनावतरणं यस्य सः। अवसेति भावार्थे क्विप् आतश्चोपसर्गे इत्यङ् वा।

१०३। लीलावन्यानतिस्था सतरुतरुतसस्थातिनन्धाऽवलालो इति प्रथमचरणे पाठः। नतिस्था भक्ति-प्रह्वा सतरुतरुतसस्था, तरुषु तरतसे च स्थितिशीला। तरून् तस्यति क्षिपति च यो वायुः। तसेः पचाद्यच्। वने पवने च वर्तमाना इति यावत् लीला वन्या वन्दनीया भवति। अतिनन्धा अतिशयितेनानन्देन अवलालीवासुभिद्। अत्रासु असु इति प्राणवाचकस्य ह्रस्वस्वरान्तस्य द्विरूपता। अबलानां गोपीनां नासुभिद् न प्राणविदारणी अपि तु आमोदवर्धिनी। द्यो वनस्था द्युलोकस्थमुपवनं तत्स्था। रचितहितचिरस्थानवद्द्योतिसुना रचितं हितं मङ्गलं चिरं व्याप्य स्थानं वृन्दावनमिति यावत्। तद्वतो द्यौस्तामभि तदभिमुखमपि असौ सुना प्रकाशिता। खे आकाशे घनघनं व्यालवन्या घनघनमतिनिविड़ितं यथा सात्तथा सञ्चरन्तो यथा वर्षासु व्याला हिंस्रप्राणिनोऽत्र समये न तथा। तादृशी वन्या वनभूमिः खेलामन्यावलम्ब क्रीड़ाकल्पान् आश्रित्य अद्धा याथार्थ्येन रसवदरसरद्वारवद्धादरा सुखोपयोगि सुयोगरूपनिमित्तेन बद्धादरा आद्धा सौरात् सूर्यसम्बन्धिनः सुरसमूहचरिताच्च विशेष्यार्थे विशेषणप्रयोगः अवनद्धा व्यतिरिक्ता अमला अपापविद्धा च भवति। प्रतिपादं प्रतिलोमानुलोमोऽयं श्लोकः स्रग्धराछन्दसि बद्धत्वात्। द्योरिति ओकारान्तं प्रातिपदिकं द्योऽभोति तदनु इतिवत् सुपसुपेति समासः। नघनघनमिति क्रियागर्भं विशेषणं न शब्देन सुप्सुपासमासश्चापि। अत्र श्लोके देशस्य वृन्दावनस्य कालस्य शरदृतोश्च सममेव तात्पर्यं सूचितम्।

१०५। कवे चक्रिणाम् चक्रयुक्तानां शकटानां चक्रेण चरतां चक्रवाकीनां वा 'चक्री कोके कुलालेहौ वैकुण्ठे चक्रवर्तिनि' इति हेमचन्द्रः। तन्त्र्या वीणावन्मधुरया ध्वनिलहर्या हेतुना अतुलगुणा अनुपमा अलौकिकमाहात्म्यवती सा प्रक्रान्ता अचला वृन्दावनभूमिः भूर्भूमिरचलानन्तेत्यादिरमरः। अजस्रमविरतभावेन अप्रीयत प्रीता। अचेतने चेतनवद्व्यवहारः कौतुकानिलमुखी ऋतुत्सवकुतूहलेन आध्मातवदना कम्रा रमणीया स्थली रिङ्गिते गमने गमननिमित्ते अभ्याहन्ति अभ्यागतवती। सादरमभ्यागतं सम्पादयतीत्यर्थः। तेन महारसभरेण उत्सवनिमित्ताग्रहातिशयेन ख्याततया निर्देशकत्वेन सद्वारिप्रकरैः समीपस्थैर्यमुनायास्तद्ध्रदानाम् जलैः शोभनशान्तिवारिसेचनेनेव भुवोऽमलतया भूमेर्वर्षाऽत्ययात् विशदस्वच्छकान्त्या हिते मङ्गलनिदाने सम्भृते समारब्धे रते आगामिन्यां रासोत्सवपूर्वरङ्गमय्यां लीलायां विस्तारि सार्वजनीनं सातं सुखमभूत्। षड्डर-चक्रबन्धोऽयम्। अन्तस्तस्तृतीये चक्रे दक्षिणावर्तक्रमेण चतुर्भुजकवीति कविनाम। बहिस्तस्तृतीये तेनैव क्रमेण हरिचरितमिति काव्यनाम। 'घ'परिशिष्टस्थचित्रादिदं स्फुटी-भविष्यति। (App. D. Diagram. VIII)

## IX. 4, 9

४। शरदागमे दिशां नैर्मल्यात् हंसानां श्रोत्रसुखान् निनादान् सूचयितुमाह व्यातेनुरिति। सुविका-शिकाशाः विकशितकासकुसुमनिर्मला आशा दिशः परस्य अपरस्य अतिशयेन स्पर्धितया तस्याः शरदः

शोभाः सौन्दर्यसुषमाः व्यातेनुः प्रकटितवत्यः। वलितप्रशंसाः शरत्स्तुतिपरा इवेति गम्योत्प्रेक्षा। पीयूषवासा नादामृतवर्षिणः नादसुधाया आश्रयनिकेतनभूता हंसाः स्वानेन मधुरशब्देन सरसान् विलासान् व्यातेनुरिति पूर्ववाक्यस्थक्रियया ऽनुषङ्गः।

६। द्विजानां राजा चन्द्रः द्विजराजः शशधर इत्यमरः। कृत्येषु शुद्धयै चन्द्रनक्षत्रादिभिः प्रशस्तैः धर्म्यक्रियाकलापेषु कालशुद्धिसूचनाय शरद्येव धर्म्याणां क्रियाणां देवताराधनादीनां नैमित्तिकानामनुष्ठानात् तेषां च चित्तशुद्धिपरत्वं शास्त्रेषूक्तम्। सदा अहोरात्रम् आशा दिशः विमलप्रकाशाः कुर्वन् विबभौ विशेषेण शुशुभे। द्विजराजस्य उपमानमाह—योगीव। द्विजराजो योगीव ब्राह्मणश्रेष्ठो योगाभ्यासरतो समाजहितार्थी यथा शुद्धयै चित्तशुद्धयर्थं सम्पादितैः कृत्यैः कर्मयोगाय सदाशा सतां साधूनामीप्सितानि कुर्वन् समासादयन् भाति सर्वोत्कर्षेण वर्तते द्विजराज इति ब्राह्मणश्रेष्ठ इत्यपि श्लेषेण।

## XII. 65

६५। तत्पुरीशस्य तस्या मथुराया अधिपते र्मालोपहारकं पुष्पितै र्वृक्षै र्लताभिश्चोपहारकमामोदनिधानं काननमुपवनं वीक्ष्य अमुदा आनन्दाभावेन हृदोऽन्यतो हृदयाद्बहिः अद्भुतदर्शकं विचित्रद्रष्टव्यनिदर्शकं नेत्रं रथमनैषीत् नीतवान् कंसस्यात्याचारसाक्षीभूतं वनमवज्ञया कदर्थितवान्। द्वितीयोऽर्थस्तु पुरि मथुरायाम् ईशस्य भगवतः श्रीकृष्णस्य मालोपहारकं माल्यकारेण रजकेन प्रागेव मालोपहारेण विभूषितमाल्योपहारं माल्योपायनं कं मस्तकं यत्र इति वा आननं रम्यं मुखं वीक्ष्य का मथुरावासिनी नारी हृदो मुदा हार्दिकेन आनन्दातिशय्येन अद्भुतदर्शकं उपस्थापयितृ नेत्रं लोचनमन्यतो तन्मुखदर्शनातिरिक्तात् अभीष्टात् परावर्तितुं न ऐषीत् नेप्सितवती अपितु सर्वा एव तत्रत्या नार्यस्तं कुतूहलेनावलोकयामासुः॥ कविश्रेष्ठस्य सूक्त्यां 'नेत्रैः पपुस्तृप्तिमनाप्नुवद्भि'रित्याशयः। कं शिरो (?) मथुरावासिन्यः।

## XIII 2, 3, 6-8, 16, 17,

२। इह मथुरामण्डले हृदये निष्ठुरे क्रूरे प्रमाप्रभौ प्रकृष्टदीप्त्या निग्रहानुग्रहसमर्थे कंसे क्षितिः तस्य भूमौ राज्यमिति यावत् भूवलयलयक्षितिः पृथिवीमण्डले प्रलीनक्षया बभूव त्रैलोक्यराज्यात् तस्य प्रभावावदानमासन्नं जातस्खलनं जातम्। अथच इह सूर्यास्तकाले अदये स्वकीयालोकरूपानुग्रहं पराकुर्वति प्रमाप्रभौ आलोकदातरि देवे सूर्ये क्षितिः पृथिवी भूवलयलयक्षितिः भूगोलके निबद्धवासा ज्योतिष्कचक्रसहायहीना सुतरामसहाया जाता। क्षितिर्निवासो मेदिन्यां कालभेदे क्षये स्त्रियामिति मेदिनी। सदासदाद्यदयः सदास्य सानुचरस्य दादयन् भृशं हिंसापरः अयः विधिर्यस्य तादृशः सन् दयदानगतिरक्षणहिंसाऽदानेष्विति धातुपाठः। तस्मात् यङ्लुकि शतरि।

यद्यपयः शुभावहो विधिरिति कोषः, तथापि विधिसामान्येऽत्रास्य प्रयोगः। रुषा क्रोधेन इभाहिताहितान् हस्तिनामहितेऽवस्थाविपर्यये आहितान् नियुक्तान् अधिकृतान् पुरुपुरुषान् प्रबलपुरुषकान् अन्वशात् आदिष्टवान्। अत्र नलोदयादर्वाग्भवयमककाव्येष्विव विश्रान्तिकरो यमकयोगः।

३। मत्तोरणरणभुवि मदपुरवहिद्वाररूपे रणाङ्गने मत्त उच्छृङ्खल उच्चैः लः शैलादुद्गतः पार्वत्य उच्चैरुन्नतायतनः सदम्भः मदेनोत्कटतया क्षीवः शौण्डः विजिगीषाप्रवण इति यावत् शौण्डः निपुणः विपक्षदलने प्रथितप्रभावः। श्रेयस्कर कुवलयापीड़ो मम हितविधायी कुवलयापीड़नामा हस्ती भवद्भिः युस्माभिः स्वैर्भवद्भिः निःसङ्कोचं स्वच्छन्दतया व्यवहरद्भिः दानादानाकुलदलदलि श्रीमदम्भः दानस्य मदस्रुतेः आदानात् स्वीकारात् आकुलं विपर्यस्तभावेन दलतां कम्पयतामलीनां दानसौरभेनाकृष्टानां भवाणां श्रिया यत् शोभनमम्भो वारि यस्य तत् यथा स्यात् तथा व्यवहरन्नित्यर्थे योजना। शौण्डभ्रमरमणतो शुण्डस्यायमिति शौण्डः तादृशो भ्रमः भ्रामणं तदुत्थं रमणं क्रीड़नं तस्मात् व्यस्तविश्वस्तविश्वश्रेयः व्यस्तं सर्वथोपप्लुतं विश्वस्तस्य, तस्मिन् विश्रम्भोदयात् समाहितनिर्भरस्य विश्वस्य जगतः श्रेयः मङ्गलं येन तद्यथा स्यात् तथा। क्रियतामिति प्रविश पिण्डीमित्याद्यालङ्कारिकोदाहृतिवदाक्षेपेणाध्याहारः।

६। कंसस्य स्वीयान्नियुक्तान् प्रति प्रचुरतिरस्कारोत्प्रासभाषणम्। हि हेतौ। भवन्तः समानभोगाः मानेन प्रचुरतरसम्मानेन सहितो भोगो भृतिर्येषां तादृशा मन्दा अलसा मूढ़ाश्च। तथा च अहिसमानभोगाः सर्पसदृशफणामण्डिताः काययुक्ताश्च लक्षणया किमपि अप्रियवाक्यं न सहन्ते अपि तु विरुद्धाचरणं कर्तुमभिसन्धिं कुर्वन्ति। परं समस्ताः सर्वे यूयं वस्तुलाभं यथायोग्यं प्राप्यं न गमिताः अपि तु काक्वा गमिता एव। नोचितां शिक्षामधिगतवन्तः आयत्यां तु भवतां यथोचितशिक्षा भविष्यतीति तर्जनम् इति वाकूतम्, समस्ताः पृथिव्या मनुष्याणां क्रियोपयोगे प्रवृत्ताः यावतोयाः पदार्थाः वो युष्माकं तु लाभं सादृश्याभासं न गमिताः नासादिताः स्मः।

७। साहसं शौर्यं वीरोचितमर्यादाञ्च गौड़ीयभाषया तथाऽभिहितं न तु दमं सम्प्रदायसिद्धं दुष्करकर्मेत्यादि विहाय त्यक्त्वा पलायमानेन प्रस्थातुकामेन अपिहितेन आच्छादितेन मायामाश्रयता पुरन्दरेण देवराजेनेन्द्रेण विहायसा आकाशपथेन पलायमानेन तृणेनेवाचरता उन्मानेन 'पलमुन्मानमांसयो'रिति रुद्रः। अहनम् अहन् इति अनद्यतने लङ्। कथम्? यतः पुरन्दरेणापि पुरदारिणाऽपि शत्रुमुखेन हिते मङ्गलपरिणा(?)नवस्तुतः सद्य एव सम्मानितः। उन्मानानात् सम्मानलाभस्य योग्यत्वात् साहसं तु दमे दुष्करकर्मणि। अविमृश्यकृतौ धाष्टर्ये इति हेमचन्द्रः। शौर्यार्थे प्रयोगः सुलभः।

८। अत्र केवलं जलधियोजितगोत्रावासिनः सागरवेष्टितपृथिवी न भवतां चरितं न जानन्ति। 'वा' इति विकल्पे। 'वा स्याद्विकल्पे च समुच्चये' इति विश्वः। विकल्पे वा जलधियो जड़धियो जड़धियः डलयोर्व्यत्ययानुमोदनात्। मन्दबुद्धयः जितगोत्रावासिनः गोत्रा गोसंहतिः

तया सह वसन्ति ये ते गोत्रावासिनः गवां प्रतिवेशिनस्तत्सदृशाः जितां बुद्धप्रभावे नातिशयिता गोत्रावासिनः यैस्ततोऽल्पबुद्धयः अत्रभवतां महत्तराणां विपरीतलक्षणया निकृष्टतरां चरितं विदुः 'वा' इत्यवधारणे। गोत्रा कुः पृथिवी पृथ्वीत्यमरेण भूपर्याये तथा उक्षणां संहतिरौक्षकम्। गव्या गोत्रा गवामिति चामरः।

१६। नवराजकला नवीनेन्दुकला। तद्वत्तं अग्यूसुन्दरोवदनं अपरूपरूपसीमुखम्, तत्रस्था य इन्दुद्यु-तिगुमां (?) विस्मयोषितः चन्द्रकान्तिचमत्काराभे भावने स नवराजशशिप्रभासुरः अथच विशिष्टपर्वेण तत्र कृतावासः। उदीयमानाः राजचन्द्राः राजसूर्याश्च तद्वत् प्रभासुरः प्रकृष्ट-दीप्तिशाली 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति पूर्वावयवे उपमानानि सामान्यवचनै-रित्युत्तरावयवे च समासः। तथाविधो मदनः योषितः तस्य कंसस्य विलासिनीः पीड़यतिस्म। कदर्थितवान्। अन्यत्र च चन्द्रस्य विकारोद्दीपकत्वात् सूर्यस्य च स्वतएव तापकत्वादेवं करोति। विरहिसार्थस्य तु मदनं प्रति आक्षेपो इमावेव विषयोकृतः।

१७। कामतोऽपि सुन्दरतराकृतिः वस्तुतस्तु मिथ्यारूतत्वाभावात् गरिम्ना मोहजाज्ञानादमनोज्ञतरः युस्माकं पतिः नो विलासिनीनां परकीयानां मध्ये कं जनम् अति अतिशयेन दर्पतश्चुतं रूपं दर्पात् पराभूतं करोति स्म स्मेत्यतीतक्रियासूचनम्। इति भावात् एव धारणया मदन एवं सममदाः कन्दर्पसदृशाभिमानवतीः प्रमदाः दुनोति पीड़यति विरहज्वालया करोति स्म व्यथातुराः। कृपामयीसहायेन कृपामयीप्रसादतः। दुरूहकूटवन्येऽत्र दुरूहसङ्गतिः कृता॥

# I षोडशदलपद्मबन्धः

## (ह. च. ८।६५, ६६)




B.

श्लोकः- ८।६५

सं सा र सा र सा भा सा
प्र सा द सा र सा ध्व सा।
र सा भ्या सा दि सा ध्वा सा
या सा या सा र सा ल सा॥

एवं ८।६६ श्लोके। (म केन्द्रे)।

# II अष्टदलपद्मबन्धः
## (ह. च. ८।६७,६८)




B.

श्लोकः-८।६८

स व्ये नि व्ये स द्य मो दा
स ने ज्ञा ने स ते हि ते।
स दा मो दा स ने स्या ने
स ह वे ह स मे र मे॥

एवं ८।६७ (वि केन्द्रे)।

# III अष्टदलपद्मबन्धान्तरम्

## (ह. व. ८|६९,७०)




श्लोकः- ८|६९ एवं ८|७० (का केन्द्रे)

के श वे ह त्व या ना के
के ना या मि त मा लि के ।
के लि मा त त्व ते भी के
के भी ते वि नि वे श के ॥

# IV चक्रबन्धः

## ( ह. च. ८|८५ )

७८ पृः मुद्रितमुत्तरार्धं न सम्यक्। गलितांशो द्वारेऽन्यथैव स्यात्।

१




B.

५

श्लोकः– ८|८५

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| उत्तरार्धं गलितम् | ज | य | कृ | षा | ज | ग | द्बी | ज |
| | ज | ल | जा | क्ष | ज | ना | र्द | न। |
| ३य ४र्थ ८म १२श १६श | I | II | III | | V | VI | VII | |
| | – | – | – | क्ष | – | – | – | ज |
| अक्षराणि पूर्वार्ध इव | IX | X | XI | | XIII | XIV | XV | |
| | – | – | – | ष | – | – | – | न॥ |

I, II, III, V, VI, VII, IX, X, XI, XIII, XIV, XV.

अक्षराणि गलितानि।

# V चक्राबन्धः
## (ह. च. ८|८६)




(द्विः)

B.

श्लोकः- ८|८६

म धु श त्रो म धु क रा
म त्ता म धु म दा दि मे ।
गा य न्तो त्रो तस वे धी रा
म नः सा धु ह र न्ति मे ॥

# VI खड्गबन्धः
## ( ह. च. ८।८७-८८ )




श्लोकौ :-

का लि न्दी ज ल क ल्लो ल के लि का न्ते न वा यु ना।
मा ल ती म ल्लि का मो द हा रि णो सं वि मो हि का॥ ८७
का म नी य क म प्य स्य का मि नी मा न स न्दि का।
का म स्या न न्द मा ध त्ते कृ ष्णा न न्द व न स्थ ली॥ ८८

# VII मुरजबन्धः

## (ह. च. ८|८६)




B.

श्लोकः-(८|८६)-

स र सा सु र सा र स्य

त र सा मो दि सा र सा

स र सा दि न सा तु ल्या

सा र सा सु र सा तु ला

# VIII षडरचक्रबन्धः (कविकाव्यनामाङ्कचक्रम्)

## ह. च. ८|१०५



श्लोकः- (८|१०५) -

त न्व्या प्रीय त सा च ल तु ल गु णा ज स्रं व ने च क्रि णा-
म भ्या ह न्ति च को तु का नि ल सु खी क म्रा स्य ली रि ङ्गि ते।
स दा रि प्र क रै भुं वो म ल त या वि स्ता रि सा तं हि ते
ते न ख्या त त या म हा र स भ रे णा भू द्र ते स म्भु ते॥